| | | |
|---|---|---|
| 1531 | Raghava Das ... | Sanskrit Pathshala, Rudrapur, Gorakhpur. |
| 1532 | Tirthraj Tripathi ... | Sanskrit Pathshala, Ramkola, Gorakhpur. |
| 1533 | Chandrika Prasad Pandeya ... | Ditto. |
| 1534 | Shalgram Misra ... | Vidya Dharm Sanjivani Sanskrit Pathshala, Post Deor[illegible] Gorakhpur. |
| 1535 | Jaleshwar Dwivedi ... | Ditto ditto. |
| 1538 | Kedar Nath Tripathi ... | Vishnu Datt Brahmachari Sanskrit Pathshala, Khair[illegible] Post Bhatpar Rani, Gorakhpur. |
| 1539 | Lal Bihari Shukla ... | Sanskrit Pathshala, Khairati, Post Office Sidhegaur, Gor[illegible]pur. |
| 1541 | Chandra Charu Mani Tripathi | Sanskrit Pathshala, Sirjam, Post Gauri Bazar, Goral[illegible]pur. |
| 1542 | Ram Pyare Prasad Tripathi | Ditto ditto. |
| 1545 | Babu Nandan Prasad Tripathi | Satya Narayan Sanskrit Pathshala, Barari, Post Deor[illegible] Gorakhpur. |
| 1552 | Ram Sajivan Prasad Misra ... | Ditto ditto. |
| 1564 | Thakur Tripathi ... | Godharm Samvaidhini Sanskrit Pathshala, Barhaj, Gorak[illegible]pur. |
| 1568 | Raja Ram Pandeya ... | Ditto ditto. |
| 1573 | Ram Nagina Pandeya .. | Sarwar Pathshala, Kishoreganj, Post Salempur, Gorakhpu[illegible] |
| 1574 | Kamla Kant Misra ... | Ditto ditto. |
| 1576 | Sitaram Pathak ... | Ditto ditto. |
| 1578 | Harsh Narayan Dvivedi ... | Radha Krishna Sanskrit Pathshala, Lakshmi Niwasba[illegible] Deoria, Gorakhpur. |
| 1579 | Shiva Pujan Pandeya ... | Ditto ditto. |
| 1580 | Vijai Shankar Ojha ... | Paramhansanand Vidyalaya, Barhaj Bazar, Gorakhpur. |
| 1581 | Janak P[illegible]a .. | Dit[illegible]o ditto. |
| [illegible] | K[illegible] | [illegible] ditto. |
| [illegible] | [illegible] | [illegible] ditto. |
| [illegible] | [illegible] M[illegible]sra .. | [illegible]tto ditto. |

[ श्री–'राम'–'कृष्ण'–स्मारकम्— ]

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः—

नवमङ्कुसुमम् ।

दीपिका-न्यायबोधिनी-युतः–

# तर्क-संग्रहः

अतिसरलया, परीक्षोपयोगिन्या,—
'अभिनवराजलक्ष्मी-परिमल'टीकया—
'आमोदा'ख्य टिप्पण्या च—
—विराजितः ।

समलङ्कर्त्ता—

**श्रीगुरुप्रसादशास्त्री,**

व्याकरणाचार्यः, दर्शनाचार्यः, न्यायशास्त्री ।

भार्गवपुस्तकालयाध्यक्षैश्चायं प्रकाशितः ।

'चिडावा'-राजपूताना-वास्तव्यानां-मरुमण्डलमार्त्तण्डानां—

प्रत्यग्रशङ्कराचार्याणां श्री १०८ 'श्रीस्नेहिरामजीशास्त्रि'णां—

धर्मसंरक्षकाणां—सेठ'श्रीराधाकृष्णजीपोद्दार'महोदयानाञ्च—

स्मारकं—

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः—

* नवमङ्कुसुमम् *

'दीपिका''न्यायबोधिनी'युतः—

# तर्क-संग्रहः

श्रीगुरुप्रसादशास्त्रि-व्याकरणाचार्यविरचितेन—

अभिनवराजलक्ष्मीपरिमलेन, आमोदेन च सहितः ।

सम्पादकः—

पं० नन्दकिशोरशास्त्री, आयुर्वेदाचार्यः ।

प्रोफेसर—श्रीराजस्थान-संस्कृत-कालेज, मीरघाट, काशी ।

'भार्गव-पुस्तकालया'ध्यक्षैश्चायं प्रकाशितः ।

१९९१ ज्येष्ठः ।

मूल्य ॥)

(१) स्व स्वेन स्वाधिकार कृतमिदमिति ॥
(२) श्री गणेशाय नमः नमः शिवाय ॥

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः—

* समर्पणप्रसूनाञ्जलिः *



सकलशास्त्रपारङ्गतानां—मरुमण्डलमार्त्तण्ड-'श्रीस्नेहिरामजी' शास्त्रिणां,—
जगद्विदित—सेठ-श्री-'राधाकृष्णजीपोद्दार' महोदयानाञ्च
—स्मारकमेतद्ग्रन्थरत्नं—

'धर्मसंरक्षक'—

सेठ श्री 'केशवदेवजी-पोद्दार' महोदयानां,—
सेठ श्री 'जानकीप्रसादजी' महाभागानाञ्च,—
—करकञ्जयोरञ्जसोपयनयति सस्नेहं—

—श्रीगुरुप्रसादशास्त्री ।

॥ श्रीः ॥

# तर्कसंग्रहः ।

दीपिकया न्यायबोधिन्या अभिनवराजलक्ष्म्या च सहितः ।



निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥

❀ न्यायबोधिनी ❀

[1]अखिलागमसञ्चारि श्रीकृष्णाख्यं परं महः ।
ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम् ॥ १ ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थमिष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति—**निधायेति** ॥ १ ॥

* *अभिनव-राजलक्ष्मी-परिमलः* *

मोदकामोदकान्तेहन्दोलितालिकुलं नुमः ।
त्वङ्गत्तुङ्गतरङ्गाब्धितरलन्तुन्दिलं महः ॥ १ ॥
वन्देऽनवद्यसद्धृद्यविद्योद्योतितदिङ्मुखान् ।
मरु-मण्डल-मार्त्तण्ड-स्नेहिरामजिशास्त्रिणः ॥ २ ॥

---

१. अखिलेषु आगमेषु सञ्चरितुं शीलं = सकलशास्त्ररहस्यभूतं, वेदान्तवेद्यं, परं = सर्वजगदुपादानम्, महः = चित्स्वरूपं, न्यायं बोधयति तच्छीलां—न्यायबोधिनीं = तर्कशास्त्रबोधिनीं, शिष्यशिक्षार्थं = मच्छिष्या अप्येवं मङ्गलं कुर्युरिति शिष्यशिक्षणाय, चिकीर्षितस्य = कृतिसाध्यत्वप्रकारिका या इच्छा—'अयं ग्रन्थो मत्कृतिसाध्य' इति, तद्विषयीभूतस्य—तर्कसंग्रहाख्यग्रन्थस्य ।

❀ दीपिका ❀

विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे तर्कसंग्रहदीपिकाम् ॥१॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमित-श्रुतिबोधितकर्तव्यताकमिष्टदेवतानमस्कारलक्षणं मङ्गलं—शिष्यशिक्षार्थं निबन्धंश्चिकीर्षितं ग्रन्थादौ प्रतिजानीते—निधायेति ।

❀ परिमलः ❀

'पोतदार'कुलाम्भोधिचन्द्राच्छ्रेष्ठिशिरोमणेः ।
'राधाकृष्णा'भिधाल्लब्धजीवनस्तनुते न्विदम् ॥ २ ॥

अम्बया—पार्वत्या सहिता मूर्त्तिर्यस्यासौ—साम्बमूर्त्तिः, तं—साम्बमूर्त्तिम्-अर्द्धनारीश्वरं, गिरां गुरुं-निखिलविद्यानामुपदेष्टारं, विश्वेषामीश्वरो-विश्वेश्वरः, तं—जगन्नियन्तारं, विश्वनाथं, प्रणिपत्य—प्रणम्य, शिशुभ्यो हितां—शिशुहितां—बालोपकारिकां, तर्कसंग्रहस्य दीपिकेव—तर्कसंग्रह-दीपिका, तां—तर्कसंग्रहार्थप्रकाशिकां, टीकां—विवृतिं, कुर्वे—अहमन्नम्भट्टो विदधे—इति—श्लोकार्थः । 'भागुरिमते हलन्तेभ्योऽपि टापोऽनुशासनात्-गिरामिति द्वितीयान्तमतो-गिरां-वाणीं, गुरुं-स्वगुरुञ्च नत्वे'त्यर्थोऽपि सम्भवति । वस्तुतस्तु 'गिरं गुरु'मित्येव साम्प्रदायिकः पाठः ॥ १ ॥

अम्बया—मायया सहितमित्यर्थान्मायोपहितचैतन्यस्य बोधेन साकारत्वलाभः ।

ग्रन्थादौ कृतस्य मङ्गलस्य, तन्निबन्धनस्य च साफल्यं दर्शयति—**चिकीर्षितस्येति ।** कर्त्तुमिष्टः-चिकीर्षितः, तस्य । ग्रन्थस्य = तर्कसङ्ग्रहस्य, निर्गता विघ्ना यस्याः सा-निर्विघ्ना, सा चासौ समाप्तिश्च, तस्यै—निर्विघ्नसमाप्त्यर्थं = विघ्नध्वंसपुरस्सरसमाप्तिरूपफलायेत्यर्थः । शिष्टानाम्-आप्तानां य आचारः, तेन अनुमिता या श्रुतिः,—'समाप्तिकामो मङ्गलमाचरे'दिति श्रुतिः,—तया बोधिता कर्त्तव्यता-कृतिसाध्यता यस्य तत्-श्रुति-

❀ दीपिका ❀

ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति, मङ्गले कृतेऽपि कादम्बर्यादौ निर्विघ्नपरिसमाप्त्यदर्शनात्, मङ्गलाभावेऽपि किरणावल्यादौ समाप्तिदर्शनादन्वयव्यतिरेकव्यभिचारादिति चेन्न, कादम्बर्यादौ विघ्नबाहुल्यात्समाप्त्यभावः, किरणावल्यादौ तु ग्रन्थाद्बहिरेव मङ्गलं कृतमतो न व्यभिचारः ।

❀ परिमलः ❀

बोधितकर्त्तव्यताकम् । इष्टदेवतानमस्कारलक्षणं—स्वेष्टदेवविश्वेश्वर-नमस्काररूपं मङ्गलम् । निबध्नन् = तर्कसङ्ग्रहादौ निबध्नन्, चिकीर्षितं = पदार्थसङ्ग्रहं, प्रतिजानीते = शिष्यावधानाय तन्निरूपणविषयिणीं प्रतिज्ञां कुरुते ।

ननु मङ्गलस्य समाप्तिं प्रति हेतुतैव नास्ति, व्यर्थं मङ्गलाचरणमिति शङ्कते—**नन्विति** । किरणावली–उदयनाचार्यकृता । यत्सत्त्वे यत्सत्त्वम्—अन्वयसहचारः, यदभावे यदभावो व्यतिरेकसहचारः, यथा 'दण्डसत्त्वे घटसत्त्वं, दण्डाभावे घटाभाव' इत्यन्वयव्यतिरेकसहचारनिश्चयाद्दण्डे घटकारणत्वनिश्चयः, तथा मङ्गले–"मङ्गलसत्त्वे समाप्तिसत्त्वं, मङ्गलाभावे समाप्त्यभावः" इत्येवमन्वयव्यतिरेकसहचारनिश्चयाभावान्न समाप्तिसाधनतेत्याशयः ।

कादम्बरीकर्त्तरि व्यभिचारं वारयति—**कादम्बर्यादाविति** । यावद्विघ्नध्वंसजनकस्य, ततो बलवत्तरस्य वा मङ्गलस्यैव समाप्तिहेतुतया—कादम्बरीकर्त्तरि बलवत्तरविघ्नसत्त्वेऽपि तदात्मनि[1] स्वानुकूलप्रयत्नवत्त्वसम्बन्धेन बलवत्तरमङ्गलाभावान्नान्वयव्यभिचार इत्याशयः । व्यतिरेकव्यभिचारं निरस्यति—**किरणावल्यादाविति** । किरणावल्यां ग्रन्थाद्बहिरेव मङ्गलं कृतमिति कल्पनात्, नास्तिकादिग्रन्थेषु जन्मान्तरीयमङ्गलकल्पनाद्वा न व्यतिरेकव्यभिचार इत्याशयः ।

अतः = कादम्बर्यादौ विघ्नबाहुल्यात्, किरणावल्यादौ बहिरेव मङ्गल-

१ चरमवर्णध्वंसप्रमाज्ञानरूपायाः समाप्तेरात्मन्येव कल्पनौचित्यात् । स्वं = मङ्गलं ।

❀ दीपिका ❀

**ननु मङ्गलस्य कर्तव्यत्वे किं प्रमाणमिति चेन्न, शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात्, 'समाप्तिकामो मङ्गलमाचरेत्' इति श्रुतेः,**

❀ परिमलः ❀

करणकल्पनाच्च, न व्यभिचारः = नान्वयव्यतिरेकव्यभिचारः।

मङ्गलस्यावश्यकर्त्तव्यतां दर्शयितुमाशङ्कते—**नन्विति। शिष्टेति।** भक्तिश्रद्धातिशयेन वेदानुमतकर्मानुष्ठातृत्वं–शिष्टत्वं,[1] दाम्भिके आस्तिकाभासे व्यभिचारवारणाय–'भक्तिश्रद्धे'ति। चैत्यादिवन्दनप्रवृत्तबौद्ध-यवनादौ व्यभिचारवारणाय—'वेदानुमते'ति। शिष्टानां य आचारः—कृतिः, तयानुमिता या—"समाप्तिकामो मङ्गलमाचरेत्" इति श्रुतिः, तस्या एव मङ्गलनिष्ठावश्यकर्त्तव्यत्वप्रमाप्रयोजकत्वादित्याशयः। **श्रुतेरेवेति।** एवकारोऽप्यर्थकः, तथा च "मङ्गलं कर्त्तव्यं, [2]समाप्तिफलकत्वा"दित्यनुमानरूपप्रमाणान्तरसत्त्वमपि सूचितम्।

---

१ "वेदोक्ततत्त्वज्ञानेन वेदविहितकर्मकारित्वं शिष्टत्वं, वेदोक्ताहिंसादिप्रवणे बौद्धेऽतिव्याप्तिवारणाय वेदोक्ततत्त्वज्ञानेने"ति **नीलकण्ठः।** वेदोक्ताबाधितप्रामाणिकार्थाभ्युपगन्तृत्वे सति वेदविहिता–ऽकरणप्रत्यवायफलककर्मकारित्वं शिष्टत्वमिति नातो मरणाद्यर्थकाथर्ववेदोक्ततत्त्वज्ञानमात्रसारेऽभिचारचतुरेऽतिव्याप्तिरिति—**नृसिंहः।**

ननु श्रुतावनुमितत्वमनुपपन्नं, श्रुतेर्वेदबोधितकर्त्तव्यताकत्वरूपविधेय–कोटिप्रविष्टत्वेन विधेयतावच्छेदकतया विधेयत्वाभावात्, विधेय एवानुमितत्वव्यवहारस्य वह्निमान् धूमादित्यादौ दृष्टत्वात्, तत्र हि विधेये वह्नावेवानुमितत्वव्यवहारो न विधेयतावच्छेदके वह्नित्व इति चेन्न। तादृशश्रुतेरनुमितेः पूर्वमसिद्धतया श्रुतिपर्यन्तमेव विधेयत्वस्वीकारात्, श्रुतावनुमितत्वव्यवहारे बाधकाभावादिति—**नीलकण्ठः।** अन्ये तु स्वबोधितकर्त्तव्यताकत्वसम्बन्धेन श्रुतिरेव साध्या, न तु श्रुतिबोधितकर्त्तव्यताकत्वपर्यन्तं साध्यं, तथा च श्रुतौ विधेयत्वं स्पष्टमेव। स्वं–श्रुतिः, अनुमानाकारश्च–'मङ्गलं श्रुतिमत्, तादृशशिष्टाचारविषयत्वा'दित्याहुः। २ समाप्त्यन्याफलकत्वे सति सफलत्वादित्यर्थः।

❀ दीपिका ❀

तथा हि—"मङ्गलं वेदबोधितकर्तव्यताकम्, अलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिवत्"। भोजनादौ व्यभिचारवारणायालौकिकेति, रात्रिश्राद्धादौ व्यभिचारवारणायाविगीतेति, शिष्टपदं स्पष्टार्थम्, 'न कुर्यान्निष्फलं कर्मे'ति जलताडनादेरपि निषिद्धत्वादिति ।

❀ परिमलः ❀

मङ्गलस्य श्रुतिबोधितकर्त्तव्यताकत्वेऽनुमानं प्रमाणं प्रदर्शयति—**तथा हीति**। वेदेन बोधिता—कर्त्तव्यता = अवश्यानुष्ठेयता यस्य तत्—वेदबोधितकर्तव्यताकं—मङ्गलम्, अलौकिकः = रागादिप्राप्तभिन्नः, अविगीतः = धर्मशास्त्रानिषिद्धः अनिन्दितो यः—शिष्टानाम् आचारः = कृतिः, तद्विषयत्वात्, दर्शपौर्णमासयागादिवत्,—इत्यर्थः। भोजन–शयनासनादावविगीतशिष्टाचारविषयत्वरूपहेतोः सत्त्वेऽपि वेदबोधितकर्तव्यताकत्वविरहाद्व्यभिचारः स्यादतो'ऽलौकिके'ति विशेषणं, भोजनादिकं च रागादिप्राप्तत्वाल्लौकिकमेव नातो व्यभिचारः। उन्मत्तकृतरात्रिश्राद्धादावलौकिकशिष्टाचारविषयत्वरूपहेतोः सत्त्वेऽपि श्रुतिबोधितकर्तव्यताकत्वरूपसाध्यस्याभावाद्व्यभिचारः स्यादतः—**अविगीतेति**। रात्रिश्राद्धन्तु धर्मशास्त्रनिषिद्धं निन्दितमेवेति न व्यभिचारः।

ननु रात्रिश्राद्धे न शिष्टाचारविषयत्वमिति तत्र व्यभिचाराभावादविगीतेतिविशेषणं व्यर्थमिति चेत्सत्यं, "शिष्टपदं स्पष्टार्थ"मिति वक्ष्यमाणग्रन्थस्वारस्येन शिष्टपदस्यानतिप्रयोजनकत्वलाभात् तदनिवेश एव शङ्कासमाध्योर्नीयत्वात् । जलताडनादौ व्यभिचारवारणाय—'शिष्ट'पदम्, अन्यथाऽलौकिकाऽविगीताचारविषयत्वरूपहेतोस्तत्र सत्त्वेऽपि साध्यस्याभावाद्व्यभिचारः स्यात्। 'न कुर्यान्निष्फलं कर्मे'ति धर्मशास्त्रनिषिद्धत्वाजलताडनादौ व्यभिचाराऽभावे तु शिष्टपदं न देयमेवेति सरलोऽर्थः।

यद्यपि स्वर्गादिरूपे यागादिफलेऽविगीतशिष्टाचारविषयत्वस्य सत्त्वा-

❀ दीपिका ❀

तर्क्यन्ते प्रतिपाद्यन्त इति तर्काः = द्रव्यादिसप्तपदार्थास्तेषां संग्रहः = संक्षेपेण स्वरूपकथनं क्रियत इत्यर्थः ।

कस्मै प्रयोजनायेत्यत आह—**सुखबोधायेति** । सुखेन = अनायासेन, बोधः = पदार्थज्ञानं तस्मा इत्यर्थः ।

ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वग्रन्थः क्रियते ? इत्यत आह—**बालानामिति** । तेषामतिविस्तृतत्वाद्बालानां ततः सुखेन बोधो न भवतीत्यर्थमित्यर्थः । ग्रहणधारणपटुर्बालः, न तु स्तनन्धयः । किं कृत्वा क्रियत इत्यत आह—**निधायेति** ।

❀ परिमलः ❀

व्यभिचारः, 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादौ ज्योतिष्टोमाभिन्नयागकरणिका स्वर्गोद्देश्यकभावनेति बोधात्स्वर्गेऽपि उद्देश्यत्वरूपविषयत्वस्य सत्त्वात्, तथापि विधेयतया शिष्टाचारविषयत्वमेवात्राभिप्रेतमिति न दोषः । स्वर्गस्य यागात्पूर्वमपि सत्त्वेन विधेयत्वाख्यविषयतायास्तत्राऽभावादिति ।

तर्कपदस्यारोपार्थकत्वभ्रमं वारयन् सप्तपदार्थपरतां स्फोरयति—**तर्क्यन्त इति**। पदार्थानां स्वरूपस्य = संस्थानविशेषविशिष्टघटाद्यर्थरूपतया तस्य ताल्वोष्ठपुटसंयोगरूप—'कथना'ऽसम्भवेऽपि,—स्वरूपकथनं क्रियते = स्वरूपज्ञानाऽनुकूलशब्दप्रयोगः क्रियत इत्यर्थकरणान्न दोषः—इत्यवधेयम् ।

एवञ्च "द्रव्यादिपदार्था विषयाः, तज्ज्ञानं प्रयोजनं, प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, पदार्थतत्त्वनिश्चयार्थी—अधिकारी" त्यनुबन्धचतुष्टयमपि प्रेक्षावत्प्रवृत्त्यङ्गं दर्शितं वेदितव्यम् । तर्कग्रन्थेषु = लक्षणावली—लीलावती—किरणावली—कन्दल्यादिषु, ग्रहणं = पदार्थतत्त्वबोधः, धारणं = स्मरणम्, इत्थञ्चाधीतव्याकरणकाव्यकोशादिरनधीतन्यायशास्त्रोऽत्र बालपदेन विवक्षितः । स्तनन्धयः = स्तनपः शिशुः ।

मंगलं वेदवत्- वेद बोधितं कर्तव्यताकत्वं सम्बन्धेन



**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः ॥१॥**

❀ न्यायबोधिनी ❀

अथ पदार्थान्विभजते—**द्रव्येति**। तत्र सप्तग्रहणं पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्याप्तिलाभाय। [२]ननु शक्तिपदार्थस्याष्टमस्य

❀ दीपिका ❀

'विश्वेशं' जगन्नियन्तारं शिवं—हृदि 'निधाय' = नितरां स्थापयित्वा,—सर्वदा तद्ध्यानपरो भूत्वेत्यर्थः। 'गुरूणां' = विद्यागुरूणां, 'वन्दनं' = नमस्कारं, विधाय = कृत्वेत्यर्थः।

पदार्थान्विभजते—द्रव्येति।

❀ परिमलः ❀

नचेश्वरनत्यात्मकमङ्गलेनैव सामञ्जस्ये गुरुवन्दनं व्यर्थमिति वाच्यं, "शिवे रुष्टे गुरुस्त्राता, गुरौ रुष्टे न कश्चन," "गुरुः साक्षात् परं ब्रह्म" इत्यादिवचनात्परमोत्कृष्टस्य गुरोर्नतेरावश्यकत्वात्। तत एव सिद्धे विश्वेश्वरनतिस्तु निरीश्वरमतनिरासायेति—**नव्याः**।

**विभजत इति**। स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्ध-

---

१ ननु सप्तत्वं प्रत्येकवृत्तिसंख्यारूपं, तथा च गुणे कथं सप्तत्वं, गुणे गुणानङ्गीकारादिति चेन्न। सप्तत्वस्य अयमेकः, अयमेकः, इमौ द्वौ, इत्याद्यपेक्षाबुद्धिविशेषविषयत्वस्वरूपतया गुणत्वाभावेनादोषात्, वस्तुतो गुणे समवायेनैव गुणानङ्गीकारः, संख्या तु पर्याप्तिसम्बन्धेन गुण इति न दोषः।

२ मीमांसकमतेनाशङ्कते—**नन्विति**। शक्तिनामकं पदार्थान्तरं साधयति—**तथा हीति**। सत्यपि काष्ठाऽनलसंयोगे मणिविशेषसत्त्वे तृणादीनां दाहाभावात्, मणिविगमे च दाहदर्शनाच्छक्तिर्नाम दाहाद्यनुकूलः, पदार्थः कल्प्यते, या हि मणिसत्त्वासत्त्वाभ्यां नश्यत्युत्पद्यते चेति शङ्काकर्त्तुराशयः। प्रतिबन्धकाभावविशिष्टवह्नेरेव दाहं प्रति हेतुतया, मणेश्च प्रतिबन्धकतया, मणिसत्त्वे दाहाद्यभाव इत्येवं निर्वाहसम्भवेऽनन्तशक्ति—तत्प्रागभाव—तद्ध्वंसकल्पनाया अनौचित्यान्न शक्तिरतिरिक्तः पदार्थ इति च समाधातुराशयः।

❀ न्यायबोधिनी ❀

सत्त्वात्कथं सप्तैवेति ? तथा हि—मण्यादिसंयुक्तेन्धनादौ सत्यपि वह्निसंयोगे दाहो न जायते, तच्छून्ये तु जायते, अतो मणिसमवधाने शक्तिर्नश्यति मण्यभावदशायां दाहानुकूला शक्तिरुत्पद्यत इति कल्प्यते, तस्माच्छक्तिरतिरिक्तः पदार्थ इति चेत्, [1]मणेः प्रतिबन्धकत्वेन मण्यभावस्य कारणत्वेनैव निर्वाहे मणिसमवधानासमवधानाभ्यामनन्तशक्तितद्ध्वंसतत्प्रागभावकल्पनाया अन्याय्यत्वात्, तस्मात्सप्तैव पदार्था इति सिद्धम् ॥ १ ॥

❀ दीपिका ❀

'पदस्यार्थः पदार्थ' इति व्युत्पत्त्याऽभिधेयत्वं पदार्थसामान्यलक्षणमिति लभ्यते ।

❀ परिमलः ❀

यावद्धर्मप्रकारकबोधानुकूलो व्यापारो विपूर्वक'भज्'धातोरर्थः । स्वं = विपूर्वक'भज्'धातुः, तत्समभिव्याहृतपदं—पदार्थपदं, तदर्थतावच्छेदको धर्मः—पदार्थत्वं, तद्व्याप्याः परस्परविरुद्धा यावन्तो धर्माः—द्रव्यत्व—गुणत्वादयः, तत्प्रकारको बोधः—द्रव्यं, गुणः, कर्मेत्यादि, तदनुकूलो व्यापारः,—'द्रव्यगुणकर्मसामान्ये'त्याद्युक्तिरूपः, तदाश्रयो मूलकार इति बोधः ।

ननु पदार्थसामान्यलक्षणकथनं विना पदार्थविभागो न युक्तः, सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासां प्रति हेतुतया तदनन्तरमेवावान्तरधर्मप्रकारकजिज्ञासया तथाऽभिधानौचित्यादत आह—पदस्येति । अर्थः = अभिधेयः, अभिधेयत्वम् = शब्दशक्यत्वम् । अधिकसंख्याव्यवच्छेदार्थत्वात् = अष्टत्व—नवत्वाद्यधिकसंख्यानिषेधार्थत्वात् । अधिकसंख्याव्यवच्छेदश्च—सप्त = सप्तैवेतिरीत्या निर्धारणपरव्याख्यानेन सिद्ध्यति । अतिरिक्तः = सप्ताऽतिरिक्तः, प्रमितः = प्रमाविषयः—प्रसिद्ध इति यावत् । सप्ताति-

---

१ मणेः प्रतिबन्धकत्वेनेति । सूर्यकान्तमण्यभावविशिष्टचन्द्रकान्तमणेर्दाहं प्रति प्रतिबन्धकत्वेनेत्यर्थः । एवमग्रे—'मण्यभावस्ये'त्यत्रापि व्याख्येयम् ।

❀ दीपिका ❀

नन्वत्र विभागादेव सप्तत्वे लब्धे 'सप्त'ग्रहणं किमर्थमिति चेन्न अधिकसंख्याव्यवच्छेदार्थत्वात् ।

नन्वतिरिक्तः पदार्थः—प्रमितो न वा ?

नाद्यः, प्रमितस्य निषेधायोगात्, नान्त्यः, प्रतियोगिप्रमितिं विना निषेधानुपपत्तेरिति चेन्न, न, पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्यवच्छेदार्थत्वात् ।

ननु सप्तान्यतमत्वं—सप्तभिन्नभिन्नत्वम्, एवं च सप्तभिन्नस्याप्रसि-

❀ परिमलः ❀

रिक्तत्वेन पराभिमतपदार्थ एवात्र पक्षत्वेनोपादेयः, अन्यथा सप्तातिरिक्तवस्तुनो नैयायिकमतासिद्धतया सप्तातिरिक्तपदार्थत्वेन पक्षताया एवासम्भवः स्यात्, उभयवादिसिद्धस्यैव पक्षत्वात् ।

**प्रमितो न वेति ।** विषयतासम्बन्धेन प्रमितिमान्, प्रमित्यभाववान् वेत्यर्थः, अत एव 'प्रतियोगिप्रमितिं विने'त्याद्युत्तरग्रन्थसङ्गतिः, अन्यथा प्रमितभेदस्य, प्रमितत्वाऽत्यन्ताभावस्य वा विप्रतिपत्तिकोटित्वे प्रमितेरभावप्रतियोगित्वाभावेन तदसङ्गतिः स्फुटैव, मम तु प्रमितेरेव विप्रतिपत्तिकोटिप्रविष्टत्वेन न दोषः ।

**नाद्यइति ।** 'प्रमित' इत्ययं पक्षो नाश्रयितुं शक्यत इत्यर्थः । प्रमितस्य = अतिरिक्तस्य प्रमाणसिद्धस्य, निषेधाऽयोगात् = कथनमात्रेणापलापासम्भवात्, अन्त्यः = 'न प्रमित' इति पक्षः, प्रतियोगिप्रमितिं विना = प्रतियोगिनः प्रसिद्धिं विना । **निषेधेति ।** अलीकप्रतियोगिकस्याभावस्यास्वीकारात् । **सप्तान्यतमत्वव्याप्यमिति ।** उद्देश्यतावच्छेदके विधेयव्याप्यत्वस्यौत्सर्गिकतया—उद्देश्यताऽवच्छेदके पदार्थत्वे-द्रव्यादिसप्तान्यतमत्वरूपविधेयव्याप्यत्वभानादेतल्लाभः । इति = इत्येवं, व्यवच्छेदः = निश्चयः,अन्यतमत्वस्याप्रसिद्धिमाशङ्कते—**नन्विति । सप्तभिन्नभिन्नेति ।**

**तत्र द्रव्याणि—पृथिव्यप्तेजोवाय्वाकाशकाल —**
**—दिगात्ममनांसि नवैव ॥ २ ॥**

❀ न्यायबोधिनी ❀

द्रव्याणि विभजते—**पृथिवीति** । नन्वन्धकारस्य दशमद्रव्यस्य सत्त्वात्कथं नवैवेति । तथा हि—नीलं तमश्चलतीति प्रतीतेर्नीलरूपाश्रयत्वेन क्रियाश्रयत्वेन च तमसो द्रव्यत्वं सिद्धम् । न च क्लृप्तद्रव्येष्वन्त-

❀ दीपिका ❀

द्धत्वात्सप्तान्यतमत्वं कथमिति चेन्न ।

द्रव्यादिसप्तान्यतमत्वं—द्रव्यादिभेदसप्तकाभाववत्त्वमिति तदर्थत्वात्, एवमग्रेऽपि द्रष्टव्यम् ॥१॥

द्रव्यं विभजते—तत्रेति । 'तत्र = द्रव्यादिमध्ये, द्रव्याणि नवैवेत्यन्वयः । कानि तानीत्यत आह—**पृथिवीत्यादि** ।

❀ परिमलः ❀

द्रव्यगुणकर्मादयो ये सप्त पदार्थाः, तद्भेदकूटविशिष्टभिन्नत्वमिति तदर्थः । कथं = कथं प्रसिध्यति ? न प्रसिध्येदिति यावत् । अन्यतमत्वमन्यथा-व्याचष्टे—**द्रव्यादीति** । द्रव्यं न, गुणो न, कर्म नेत्यादिभेदानां प्रत्येकं प्रसिद्धानां सप्तानां कुत्राप्यसत्त्वं, द्रव्ये—द्रव्यं नेति भेदस्य, गुणे—गुणो नेति भेदस्य, कर्मादौ कर्म नेत्यादिभेदानाञ्चासम्भवात्, एवञ्च द्रव्यादिभेदसप्तकस्य द्रव्यादिषु प्रत्येकमेवाभावसत्त्वादन्यतमत्वप्रसिद्धिः सम्भवत्येवेत्याशयः ।

**एवमग्रेऽपीति** । 'नव द्रव्याणी'त्यादावपि—द्रव्यत्वं पृथिव्यादिनवान्यतमत्वव्याप्यमित्यर्थः करणीयः । पृथिव्यादिनवाऽन्यतमत्वञ्च—पृथिव्यादिभेदनवकाभाववत्त्वमिति रीत्या वाच्यमित्याशयः ।

---

१. क्लृप्तेषु = अवश्यं कल्पनीयेषु पृथिव्यादिषु । रूपवत्त्वात्' = नीलं तमश्चलती'ति प्रतीत्या तमसि नीलरूपस्य कल्पनात्, नीरूपत्वात् = रूपशून्यत्वात्,

❀ न्यायबोधिनी ❀

भावात्कुतो दशमद्रव्यत्वमिति वाच्यम्। तमसो रूपवत्त्वात्, आकाशादिपञ्चकस्य वायोश्च नीरूपत्वान्न तेष्वन्तर्भावः। तमसो निर्गन्धत्वात् पृथिव्या गन्धवत्त्वान्न पृथिव्यामन्तर्भावः। तमसो निःस्पर्शत्वात् जलतेजसोः शीतोष्णस्पर्शवत्त्वान्न तयोरन्तर्भावः। तस्मात्तमसो दशमद्रव्यत्वं सिद्धमिति चेन्न, तमसस्तेजोऽभावरूपत्वेनैवोपपत्तावतिरिक्तत्कल्पनायां मानाभावात्। न च विनिगमनाविरहात्तेज एव तमोऽभावस्वरूपमस्त्विति वाच्यम्,

❀ दीपिका ❀

ननु तमसो दशमद्रव्यस्य विद्यमानत्वात्कथं नवैव द्रव्याणि?, तथा हि—

['[1]'तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति॥']

'नीलं तमश्चलती'त्यबाधितप्रतीतिबलान्नीलरूपाधारतया क्रिया-

❀ परिमलः ❀

ननु कथं नवैव द्रव्याणि—मीमांसकैस्तमसोऽपि दशमस्य द्रव्यस्याङ्गीकारादित्याशङ्कते—**नन्विति**। तमसो द्रव्यत्वं साधयति—**नीलमिति**। अबाधितप्रतीतिबलात् = निर्भ्रान्तप्रत्यक्षप्रतीतिबलात्, 'नीलरूपाधारतये'त्यत्रायं हेतुतया योजनीयः—यतो नीलं तमश्चलतीत्यनाहार्यप्रात्यक्षिकप्रतीतिविषयत्वन्तमसः—अतो नीलरूपाधारत्वमिति। तमसो द्रव्यत्वेऽनुमानमपि प्रमाणयति—**नीलरूपाधारतयेति**। कालिकसम्बन्धेन नीलरूपाधारत्वस्याप्रयोजकत्वात्समवायेन नीलस्वरूपाधारतयेत्यर्थो बोध्यः। तथा च 'तमो

---

१ तमः—चलं खलु = चलनक्रियाश्रयतया प्रसिद्धं, नीलं = नीलगुणशालि, परापरयोर्विभागः = परत्वापरत्वे,—परत्वादिगुणवदिति यावत्, गन्धादिशून्यतया प्रसिद्धनवद्रव्येष्वनन्तर्भूतं, नवभ्यो द्रव्येभ्यो भेदमर्हति = दशमद्रव्यत्वेन स्वीकार्यमित्यर्थः। प्रक्षिप्तमेतत्।

❀ न्यायबोधिनी ❀

तेजसोऽभावस्वरूपत्वे सर्वानुभूतोष्णस्पर्शाश्रयद्रव्यान्तरकल्पने गौरवात्। तस्मादुष्णस्पर्शगुणाश्रयतया तेजसो द्रव्यत्वं सिद्धम्। तमसि नीलत्वादिप्रतीतिस्तु भ्रान्तिरेव, एवं [1]कर्मवत्ताप्रतीतिरपि, दीपापसरणक्रियाया एव तत्र भानात्॥ २॥

❀ दीपिका ❀

**धारतया च द्रव्यत्वं तावत्सिद्धम्। तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावो,—रूपवत्त्वात्, अत एव न वायौ; स्पर्शाभावात्, सदागतिमत्त्वाभावाच्च, नापि तेजसि,—भास्वररूपाभावा-**

❀ परिमलः ❀

द्रव्यं—रूपवत्त्वात्, क्रियावत्त्वाच्च, पृथिवीवत्' इत्यनुमानाकारो बोध्यः। सिद्धं = तमसः सिद्धम्, तत्र = तमसो द्रव्यत्वे सिद्धे।

क्लृप्तेषु नवसु द्रव्येष्वन्तर्भावं निराचष्टे—**नाकाशादीति**। आकाश-काल-दिगा-ऽऽत्म-मनस्सु—नेत्यर्थः। **रूपवत्त्वादिति**। 'तमो गगनादिपञ्चकेभ्यो भिद्यते' रूपवत्त्वाद्घटव'दित्यनुमानेन तमसः पृथक्त्वं साधनीयमिति भावः।

अत एव = रूपवत्त्वादेव, न वायौ—तमोऽन्तर्भवतीति शेषः। एवञ्च 'तमो वायुतो भिद्यते रूपवत्त्वात्, घटव'दित्यनुमानं बोध्यम्। कार्याभावहेतुकमनुमानमपि प्रदर्शयन्नाह—**स्पर्शाभावादिति**। वायौ समवायेन स्पर्शो वर्त्तते, तमसि च समवायेन स्पर्शो नास्तीत्याशयः। [ एवञ्च कालिकेन तमसि मतान्तरे स्पर्शसत्त्वेऽपि न दोषः। ] ननु स्पर्शाभावस्योत्पत्तिकालीनवायावपि वर्तमानतया तत्र वायुभेदाभावेन स्पर्शाभाववत्त्वहेतोर्व्यभिचारित्वमत आह—**सदागतिमत्त्वादिति**।

वायुर्हि सर्वदागतिमान्, न चैवं तमः सदा गच्छति, अतो वायौ न

---

१. कर्मवत्ताप्रतीतिः = 'नीलं तमश्चलती'ति चलनप्रतीतिः, दीपापसरणं = दीपचलनं, तत्र = 'नीलं तमश्चलती'ति प्रतीतौ।

❀ दीपिका ❀

दुष्णस्पर्शाभावाच्च, नापि जले; शीतस्पर्शाभावान्नीलरूपाश्रयत्वाच्च, नापि पृथिव्यां गन्धवत्त्वाभावात्स्पर्शरहितत्वाच्च, तस्मात्तमो दशमद्रव्यमिति चेन्न, तमसस्तेजोऽभावरूपत्वात् , तथाहि—

तमो हि न रूपिद्रव्यं—आलोकाऽसहकृतचक्षुर्ग्राह्यत्वात् , रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात् ,—तस्मात्प्रौढप्रका-

❀ परिमलः ❀

तमसोऽन्तर्भाव इत्याशयः । **भास्वरेति** । भास्वररूपस्य, उष्णस्पर्शस्य च तमस्यभावात्तमो न तेजस्यन्तर्भवति, जलेऽपि नान्तर्भवति, शीतस्पर्शाभावात्, नीलरूपवत्त्वाच्च, नापि पृथिव्यां-गन्धवत्त्वाभावात्, स्पर्शरहितत्वाच्चेत्यर्थः । तस्मात् = क्लृप्तेष्वनन्तर्भावात् ,

मीमांसकमतं निराचष्टे—नेति । **तेजोऽभावरूपत्वादिति** । प्रकृष्ट-महत्त्वोद्भूतानभिभूतरूपवत्तेजःसामान्याभावरूपत्वात्तमस इत्यर्थः । तेजःपरमाणूनां सर्वत्र सत्त्वात्तेजःसामान्याभावाभावाद्गाढान्धकारेऽपि तमःप्रत्ययानुपपत्तिरतो—महत्त्वेति । तेजस्त्र्यणुकसत्त्वेऽपि तमःप्रतीतेरानुभविकतया प्रकृष्टे 'महत्त्वे'तिविशेषणम् । एवञ्च तेजस्त्र्यणुकस्य प्रकृष्टत्वविरहान्न दोषः । चक्षुरादितेजःसत्त्वेऽप्यन्धकारप्रतीतेरुद्भूतत्वनिवेशः, सुवर्णरूपतेजःसद्भावेऽप्यन्धकारप्रतीतेरनभिभूतत्वविशेषणम्, यत्किञ्चिच्चन्द्रादितेजोऽभावसत्त्वाद्दिनेऽप्यन्धकारप्रतीत्यापत्तिरतः 'सामान्याभावे'ति विशेषणम् । वस्तुतस्तु महाप्रभात्वावच्छिन्नाभावस्तम इति न काप्यापत्तिरिति **जगदीश**भट्टाचार्याः ।

**तमो हीति** । "तमो—नीलरूपाभाववत्, आलोकनिरपेक्षचक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वात्, आलोकाभाववदि"त्यनुमानेन तमसि रूपाभावनिर्णयः, रूपिद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्यालोकस्य कारणतायाः क्लृप्तत्वात्, तमःप्रत्यक्षे चाऽऽलोकापेक्षाविरहादिति भावः । तस्मात् = रूपिद्रव्यभिन्नत्वात्,

❀ दीपिका ❀

शकतेजःसामान्याभावस्तमः, तत्र 'नीलं तमश्चलती'ति प्रत्ययो भ्रमः,—अतो नव द्रव्याणीति सिद्धम् ।

द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणम् ।

❀ परिमलः ❀

**प्रौढेति ।** यत्किञ्चिच्चन्द्रादितेजोऽभाववति तमोऽनुभवाऽऽपत्त्या 'सामान्य' पदोपादानं, सुवर्णवति भूतलेऽन्धकाराभावाऽऽपत्त्या—'प्रकाशक'पदम् । तेजस्त्र्यणुकादिमति भूतलेऽन्धकाराभावापत्त्या-प्रौढेति—उत्कटाऽर्थकमित्याशयः । ननु अन्धकाराऽभाव एव तेजः किं न स्वीक्रियते ? इति चेन्न, उष्णस्पर्श-भास्वररूपादेस्तमोऽभावात्मके तेजसि अनुपपत्तेः, एवञ्च तेजसो द्रव्यत्वमावश्यकमेवेति तमसस्तदभावस्वरूपत्वेऽनन्ततमः-प्रागभावध्वंसाद्यकल्पनया महल्लाघवमिति भावः । तत्र = तेजोऽभावात्मके तमसि,

**भ्रम इति ।** ननु यत्र भ्रमः—'शुक्ताविदं रजत'मिति-तत्र 'नेदं रजत'-मित्युत्तरकालिकबाधनिश्चयादेव रजतत्वप्रतीतेर्भ्रमत्वं कल्प्यते, तमसि तु "नीलं तमः" इति प्रत्ययानन्तरं 'नेदं नील'मिति ज्ञानं नैव केषामपि प्रेक्षावतां भवतीति-कथं तादृशप्रतीतेर्भ्रमत्वमिति चेन्न । अनन्ततमः-प्रागभाव-ध्वंसादिकल्पनापेक्षया "तेजोऽभावरूपं तम" इति स्वीकारे लाघवात् ।

ननु सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासां प्रति हेतुतया सामान्यधर्ममनिर्दिश्य द्रव्यविभागो नोचित इत्यतोद्रव्यसामान्य-लक्षणमाह—**द्रव्यत्वजातिमत्त्वमिति ।** द्रव्यत्वजातिमत्त्वं घट-पटादाविति लक्षणसमन्वयः । द्रव्यत्वजातौ मानन्तु—'द्रव्यवृत्तिर्या विभागत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्ना कारणता सा किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, घटनिरूपितदण्डनिष्ठ-कारणताव'दित्यनुमानमेव । स च धर्मो घटत्वादिर्न भवितुमर्हति-अन्यूनानतिप्रसक्तधर्मस्यैव कारणतायामवच्छेदकत्वेन घटत्व-पटत्वादेर्न्यूनवृत्तितयाऽवच्छेद-

❀ दीपिका ❀

लक्ष्यैकदेशावृत्तित्वमव्याप्तिः,—यथा गोः कपिलत्वम्। अलक्ष्यवृत्तित्वमतिव्याप्तिः,—यथा गोः शृङ्गित्वम्। लक्ष्यमात्रावर्तनमसम्भवः,—यथा गोरेकशफत्वम्। एतद्दूषणत्रयरहितो धर्मो लक्ष-

❀ परिमलः ❀

कत्वासम्भवात्, सत्ताजातेरप्यधिकदेशवृत्तितया न कारणतावच्छेदकत्वमिति—विभागादिसमवायिकारणताया अवच्छेदको धर्मो द्रव्यत्वमेवेत्याशयः।

ननु लक्षणस्य द्रव्यत्वजातिमत्त्वस्य द्रव्यत्वरूपता, लक्ष्यतावच्छेदकस्यापि द्रव्यत्वरूपतेति लक्षणलक्ष्यतावच्छेदकयोरभेदादेतल्लक्षणं न युक्तमित्यरुचेराह—**गुणवत्त्वमिति**। अव्याप्त्यतिव्याप्त्यसम्भवाख्यदोषत्रयशून्यधर्मस्यैव लक्षणतया, तादृशलक्षणज्ञानस्य च दोषत्रयरहितत्वज्ञानाधीनतया, तज्ज्ञानस्य-च (अभावबुद्धौ प्रतियोगिज्ञानस्यावश्यकत्वाद्–) दोषत्रयज्ञानाधीनतया दोषत्रयं दर्शयति—**लक्ष्यैकदेशेति**।

**अव्याप्तिरिति**। लक्ष्यतावच्छेदकावच्छिन्नयत्किञ्चिल्लक्ष्यावृत्तित्वमित्यर्थः। कपिलवर्णशालित्वरूपकपिलत्वस्य गोर्लक्षणस्य लक्ष्यतावच्छेदकगोत्वावच्छिन्नपीतगवि अवर्त्तमानत्वादव्याप्तिदोषः।

**अतिव्याप्तिरिति**। शृङ्गित्वस्य लक्ष्यभूतगोभिन्नमहिष्यादावपि वर्त्तमानतयाऽतिव्याप्तिर्लक्षणदोषः। **लक्ष्यमात्रेति**। एकशफत्वं हि अश्वादौ, न तु गवादाविति—लक्ष्यभूतसकलगोवृत्त्यभावप्रतियोगित्वादेकशफत्वमसम्भवदोषग्रस्तमिति न तल्लक्षणं भवति। एकशफत्वम् = एकखुरशालित्वं, गवादौ तु प्रतिपादं खुरद्वयमिति भावः।

**एतदिति**। अव्याप्त्यतिव्याप्त्यसम्भवाख्यदोषत्रयशून्यो धर्मो लक्षणमित्यर्थः। सास्ना = गलकम्बलः। सः = उक्तदूषणत्रयशून्यो धर्मोलक्षणाख्यः, उच्यते = तार्किकैरिति शेषः।

अत्र लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वरूपं साधारणत्वं, तद्विपरी-

❀ दीपिका ❀

णम्, यथा गोः सास्नादिमत्त्वम्, स एवासाधारणधर्म इत्युच्यते। लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम्, व्यावर्त्तकस्यैव

❀ परिमलः ❀

तमसाधारणत्वं—लक्ष्यवृत्तित्वविशिष्टालक्ष्यव्यावृत्तत्वरूपं, तच्चाव्याप्तिविशिष्टे गोः कपिलत्वरूपे लक्षणेऽप्यस्ति, गोवृत्तित्वविशिष्टस्य कपिलत्वस्य गवेतरव्यावृत्तत्वात्, नहि गोवृत्तित्वविशिष्टं कपिलत्वं गोभिन्नमहिषादिवृत्ति भवितुमर्हति, अतः पारिभाषिकमसाधारणत्वं—निर्वक्ति—**लक्ष्यतावच्छेदकसमनियतत्वमिति**। समनियतत्वञ्च व्याप्यत्वे सति व्यापकत्वम्, इत्थञ्च लक्ष्यतावच्छेदकव्यापकत्वे सति, लक्ष्यतावच्छेदकव्याप्यत्वमसाधारणत्वं, तदेव लक्षणलक्षणमित्याशयः। अतिव्याप्तस्य लक्षणस्य निरासाय—विशेष्यदलम्, अव्याप्त्यसम्भवग्रस्तवारणाय—विशेषणदलं।—यथाऽत्र गौर्लक्ष्या, तद्वृत्तिलक्ष्यताया अवच्छेदको धर्मः—गोत्वं, तद्व्याप्यत्वमपि सास्नादिमत्त्वे, यत्र सास्नादिमत्त्वं तत्र गोत्वमिति रीत्या, एवं गोत्वव्यापकत्वमपि सास्नादिमत्वरूपे लक्षणे—यत्र गोत्वं तत्र सास्नादिमत्वमितिरीत्येति लक्षणसमन्वयात्। एवञ्च गोः सास्नादिमत्त्वं लक्षणं सूपपन्नम्। एवमेव गन्धवत्त्वं पृथिव्या लक्षणं। ननु लक्षणलक्षणस्य (लक्ष्यतावच्छेदकसमनियत्वरूपस्य) गवादीतरभेदरूपायां व्यावृत्तावतिव्याप्तिः, गवादीतरभेदस्यापि लक्ष्यतावच्छेदकगोत्वसमनियतत्वात्, न चासौ गवादीतरभेदरूपा व्यावृत्तिः लक्षणलक्षणस्य लक्ष्यभूतैवेति न तत्रातिव्याप्तिरितिवाच्यम्। "व्यावर्तकस्यैव लक्षणत्वं, न तु व्यवहारसाधनस्ये"ति मते—"गौर्गवेतरभिन्ना सास्नादिमत्त्वा"दितीतरभेदानुमितिजनकस्य सास्नादिमत्त्वस्य हेतोरेव गवादिलक्षणत्वम्, न तु गवादीतरभेदात्मकव्यावृत्तेरपीति तत्र लक्षणलक्षणस्य लक्ष्यताया अनङ्गीकारादतिव्याप्तेरेव तत्र सत्त्वादिति चेदत आह—**व्यावर्तकस्यैवेति**। व्यावर्त्तकस्यैव = इतरभेदानुमितिजनकस्य सास्नादिमत्त्वरूपस्य हेतोरेव, न तु

❀ दीपिका ❀

लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिवारणाय 'तद्भिन्नत्वं' धर्मविशेषणं देयं, व्यवहारस्यापि लक्षणप्रयोजनत्वे तु न देयं, व्यावृत्तेरपि व्यवहारसाधनत्वात्।

ननु गुणवत्त्वं न द्रव्यसामान्यलक्षणम्, आद्यक्षणे उत्पन्न-

❀ परिमलः ❀

इतरभेदस्य, लक्षणत्वे = लक्षणलक्षण-लक्ष्यत्वे, (गवादिलक्षणत्वे)व्यावृत्तौ = गवादीतरभेदे। अयमाशयः,—गवि वर्त्तमाने गवादीतरघटपटादिभेदे लक्ष्यतावच्छेदकगोत्वव्यापकत्वस्य, गोत्वव्याप्यस्य च ('यत्र गोत्वं तत्र गवेतरभेद'-इति रीत्या—गवेतरभेदे गोत्वव्यापकत्वस्य, 'यत्र गवेतरभेदः तत्र गोत्व'मिति-गवेतरभेदे गोत्वव्याप्यस्य च ) सत्त्वाद्गवेतरभेदस्य गोलक्षणत्वापत्तिः, न चेष्टापत्तिरिति वाच्यम्, 'व्यावर्त्तकस्यैव लक्षणत्व'मिति मते गवेतरभेदस्येतरभेदानुमितावहेतुत्वादिष्टापत्तेः कर्त्तुमशक्यत्वात्। एवं गोवृत्त्यभिधेयत्वज्ञेयत्वादौ गोत्वव्यापकत्वस्य, गोत्वव्याप्यत्वस्य च सत्त्वाल्लक्ष्यतावच्छेदकगोत्वसमनियतत्वेन गोलक्षणत्वापत्तिरिति। **तद्भिन्नत्वमिति।** व्यावृत्तिभिन्नत्वमभिधेयत्वभिन्नत्वञ्च लक्षणलक्षणे निवेश्यमित्यर्थः। धर्मविशेषणं = लक्ष्यतावच्छेदकसमनियतधर्मविशेषणं, तथा चाभिधेयत्वव्यावृत्त्यादिभिन्नत्वे सति लक्ष्यतावच्छेदकसमनियतत्वं लक्षणलक्षणं बोध्यम्।

**व्यवहारस्यापीति।** "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इत्यभियुक्तोक्तेर्लक्षणस्य सास्नादिसत्त्वरूपस्य 'अयं गौ'रिति व्यवहारोऽपि फलमिति स्वीकारे व्यावृत्तेरपि व्यवहारसाधनतया लक्षणत्वमिष्टमेवेति न तत्रातिव्याप्तिरित्यर्थः। इत्थञ्च—तदेव लक्षणं—यद्व्यवहारसाधनमितरभेदानुमितिसाधनम्वा, एवञ्च व्यावृत्तेरितरभेदानुमितिसाधनत्वाभावेऽपि—'अयमितरभिन्न'इति—व्यवहारसाधनत्वाद्व्यावृत्तेरपि गोलक्षणत्वमिष्टमेवेत्याशयः। **आद्यक्षण इति।** 'उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियञ्च तिष्ठती'ति

❀ दीपिका ❀

विनष्टद्रव्ये चाव्याप्तेरिति चेन्न, गुणसमानाधिकरणसत्ताभिन्न-जातिमत्त्वस्य विवक्षितत्वात्। नन्वेवमप्येकं रूपं रसात्पृथगिति व्यवहाराद्रूपादावतिव्याप्तिरिति चेन्न, एकार्थसमवायादेव व्यवहारो-

❀ परिमलः ❀

सिद्धान्ताद्घटादेरुत्पत्तिक्षणे निर्गुणतया गुणवत्त्वस्य तत्राभावेनाव्याप्तिरित्यर्थः।

ननु प्रथमक्षणे घटे गुणवत्त्वस्यासत्त्वेऽपि द्वितीयादिक्षणे गुणवत्त्वस्य सत्त्वेन द्रव्यमात्रे गुणवत्त्वस्य सत्त्वान्नाव्याप्तिरित्यत आह—उत्पन्नविनष्टेति—एवञ्चोत्पन्नविनष्टघटे गुणोत्पत्त्यभावेन (आद्यक्षणे निर्गुणत्वात्, द्वितीयक्षणे च घटस्यैवाभावात्) गुणाश्रयत्वस्य तत्रासम्भवादव्याप्तिः स्फुटैवेत्याशयः।

**गुणसमानाधिकरणेति।** गुणाधिकरणवृत्तिर्या सत्ताभिन्ना जातिः—तद्वत्त्वस्य द्रव्यलक्षणत्वादित्यर्थः। एवञ्च गुणाधिकरणघटादिवृत्ति-सत्ताभिन्न-द्रव्यत्वजातिमत्त्वस्योत्पन्नविनष्टघटादौ सत्त्वान्नाव्याप्तिः।

सत्ताभिन्नगुणत्वजातिमत्त्वस्य गुणेऽपि सत्त्वादतिव्याप्तिः स्यादतस्तद्वारणाय—'गुणसमानाधिकरणे'ति। गुणत्वं तु न गुणाधिकरणद्रव्यवृत्ति। गुणाधिकरणद्रव्यवृत्तिसत्ताजातिमादाय तद्वत्त्वस्य गुणकर्मणोः सत्त्वात्तत्राति-व्याप्तिवारणाय—'सत्ताभिन्ने'ति। द्रव्य—गुणान्यतरत्वमादाय गुणेऽतिव्याप्तिवारणाय—'जाती'ति। अन्यतरत्वन्तु न जातिरिति भावः।

एवमपि = उत्पन्नविनष्टघटादावव्याप्त्यभावेऽपि, 'एकं रूपं', 'रसाद्रूपं पृथक्' इत्यादिव्यवहारदर्शनात् रूपरसादौ गुणे एकत्व-पृथक्त्वादीनां गुणानां सत्त्वात्—एकत्वादिगुणाधिकरण-रूपादिवृत्तिसत्ताभिन्नगुणत्वजातिमत्त्वस्य गुणे सत्त्वादतिव्याप्तिरुक्तलक्षणस्येत्यर्थः।

एकार्थसमवायात् = स्वाधिकरणानुयोगिकसमवायवत्त्वसम्बन्धात्, स्वम्—एकत्वादि, तदधिकरणं-घटादिद्रव्यं, तदनुयोगिकसमवायवत्त्वं-रूपे, इत्येवं समन्वयो बोध्यः, एकस्मिन्नर्थे घटादौ समवायसम्बन्धेन वर्त्तमान-

**रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण - पृथक्त्व - संयोग-विभाग-परत्वा-ऽपरत्व-गुरुत्व-द्रवत्व - स्नेह-शब्द-बुद्धि - सुख-दुःखे-च्छा-द्वेष-प्रयत्न-धर्मा-ऽधर्मसंस्काराश्चतुर्विंशतिगुणाः ॥ ३॥**

❀ दीपिका ❀

पपत्तौ—गुणे गुणानङ्गीकारात् ।

गुणं विभजते—**रूपेति** । द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः, गुणत्वजातिमान्वा । लघुत्व-मृदुत्व-कठिनत्वादीनां विद्य-

❀ परिमलः ❀

त्वादित्यक्षरार्थः । एवञ्च स्वमेकत्वमीदृशसम्बन्धेन रूपे गतं, न तु समवायसम्बन्धेन रूपे एकत्वं वर्तते, समवायसम्बन्धेन गुणवत्त्वमेव च लक्षणं, तादृशसम्बन्धेन गुणवत्त्वन्तु द्रव्यादावेव, न गुण इति नातिव्याप्तिरिति भावः ।

तादृशव्यवहारोपपत्तौ = 'एकं रूप'मित्यादिव्यवहारोपपत्तौ, **गुण इति** । समयेनैव गुणे गुणानङ्गीकारादित्यर्थः । तथा च—गुणसमानाधिकरणसत्ताभिन्नजातिर्द्रव्यत्वजातिरेव, न गुणत्वादिजातिरिति नातिव्याप्तिः ।

**द्रव्यकर्मभिन्नत्व इति** । द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणसामान्यलक्षणं, सामान्यवत्त्वस्य द्रव्यादावपि सत्त्वादतिव्याप्तिरतो 'द्रव्यकर्मभिन्नत्व'विशेषणम् । द्रव्यकर्मभिन्नत्वं सामान्यादावप्यस्ति, अतः—'सामान्यवत्त्वे'ति । सामान्यवत्त्वञ्च—समवायसम्बन्धेन सत्ताश्रयत्वं, तच्च द्रव्यगुणकर्मणामेव, "सत्तावन्तस्त्रयस्त्वाद्या" इत्युक्तेः, एवञ्च न दोषः । 'समवायसम्बन्धेने'त्युक्तेः कालिकेन सत्तावति ध्वंसे नातिव्याप्तिः ।

ननु द्रव्यकर्मभिन्नत्वविशिष्टसामान्यवान् गुण एव नान्य इति 'गुण'पदं निरर्थकमेवेति चेन्न, तस्य लक्ष्यप्रदर्शनार्थकत्वात् ।

भेदादिघटिततया गौरवाल्लक्षणमेतत्परित्यज्य लघु लक्षणान्तरमाह—**गुणत्वजातिमानिति** । ननु लक्षणस्य व्यावर्त्तकतया "गुणा गुणेतर-

**उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चकर्माणि ॥४॥**

❀ दीपिका ❀

मानत्वात् कथं चतुर्विंशतिर्गुणा इति चेन्न, लघुत्वस्य गुरुत्वाभावरूपत्वात्, मृदुत्व-कठिनत्वयोरवयसंयोगविशेषरूपत्वात्।

कर्म विभजते—उत्क्षेपणेति। संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म,—कर्मत्वजातिमद् वा। ननु भ्रमणादेरप्यतिरिक्तस्य कर्मणः सत्त्वात् 'पञ्चे'त्यनुपपन्नमिति चेन्न, भ्रमणादीनामपि गमनेऽन्तर्भावान्न—पञ्चत्वविरोधः।

❀ परिमलः ❀

व्यावृत्ताः, गुणत्वजातिमत्त्वा"दित्येवंरूपायामनुमितौ गुणत्वजातिसत्त्वरूपलक्षणरूपहेतुना गुणेतरभेदे साध्ये–गुणत्वरूपहेतौ साध्यसामानाधिकरण्यस्य सिद्धतया तत्साधनमनुचितमिति चेन्न। 'हेतुधर्मितावच्छेदके साध्यनिश्चयो न नियत'इति मताभिप्रायेणैवैतल्लक्षणप्रणयनात्। गुणत्वजातिसिद्धिश्च—"द्रव्य-कर्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, घटनिरूपितदण्डनिष्ठकारणताव"दित्यनुमानेन बोध्या।

**गुरुत्वाभावरूपत्वादिति।** एवञ्च करक्षेप्वन्तर्भावान्नातिरिक्तस्य लघुत्वस्य कल्पनमावश्यकमित्याशयः। **अवयवसंयोगेति।** इत्थञ्च संयोग एवान्तर्भावान्नातिरिक्तगुणकल्पनप्रसङ्ग इत्याशयः।

**संयोगभिन्नत्व इति।** शरीरपुस्तकसंयोगाऽसमवायिकारणे हस्तपुस्तकसंयोगेऽतिव्याप्तिवारणाय सत्यन्तं, संयोगसमवायिकारणे द्रव्येऽतिव्याप्तिवारणाया'ऽसमवायिकारण'मिति बोध्यम्। लाघवादाह—**कर्मत्वजातिमद्वेति। गमन इति।** न च वैपरीत्यं कुतो नेति वाच्यं, महर्षिणा भ्रमणादीनामेव कण्ठरवेणोक्तत्वात्।

**परमपरं चेति द्विविधं सामान्यम् ॥ ५ ॥**

**नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ॥ ६ ॥**

**समवायस्त्वेक एव ॥ ७ ॥**

**अभावश्चतुर्विधः,—प्रागभावः, प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥ ८ ॥**

❀ दीपिका ❀

सामान्यं विभजते—**परमिति** । परम्, अधिकदेशवृत्ति, अपरं—न्यूनदेशवृत्ति । समान्यादिचतुष्टये जातिर्नास्ति ।

विशेषं विभजते—**नित्येति** । पृथिव्यादिचतुष्टयस्य परमाणवः, आकाशादिपञ्चकं च—नित्यद्रव्याणि ।

समवायस्य भेदो नास्तीत्याह—**समवायस्त्विति** ।

अभावं विभजते—**अभाव इति** । तत्रोद्देशक्रमानुसारेण—

—प्रथमं पृथिव्या लक्षणमाह—**गन्धवतीति** ।

❀ परिमलः ❀

**अधिकदेशवृत्तीति** । सत्ताया द्रव्यत्वाद्यपेक्षया परत्वम्, अधिकदेशवृत्तित्वात्, द्रव्यत्वं द्रव्य एव, सत्ता तु द्रव्य-गुण-कर्मसु त्रिष्विति तत्त्वम् । **न्यूनेति** । द्रव्यत्वादीनां सत्ताऽपेक्षया न्यूनदेशवृत्तितयाऽपरत्वं, घटत्वाद्यपेक्षयाऽधिकदेशवृत्तितया परत्वमिति—विभावनीयम् ।

**जातिर्नास्तीति** । "सत्तावन्तस्त्रयस्त्वाद्याः" इत्युक्तेः । **भेदो नास्तीति** । न च समवायस्याभेदे वायौ रूपसमवायसत्त्वा'द्वायू रूपवा'निति प्रतीत्यापत्तिरिति वाच्यं, रूपसमवायसत्त्वेऽपि रूपाभावेन रूपप्रतियोगिकसमवायाभावात्तादृशप्रतीतेरसम्भवात् ।—**इत्युद्देशग्रन्थः** ।

तत्र = पृथिव्यादीनां मध्ये, उद्देशक्रमानुसारेण = नामोल्लेखनक्रमेण,

## तत्र गन्धवती पृथिवी ।

❀ न्यायबोधिनी ❀

**गन्धवतीति** । गन्धवत्त्वं पृथिव्या लक्षणम् , लक्ष्या—पृथिवी, पृथिवीत्वं—लक्ष्यतावच्छेदकम् , पृथिवीत्वावच्छिन्ना—लक्ष्यता, यद्धर्मावच्छिन्नं लक्ष्यं—स धर्मो लक्ष्यतावच्छेदकः, यो धर्मो यस्यामवच्छेदकः सा तद्धर्मावच्छिन्ना, तथा च लक्ष्यतावच्छेदकं पृथिवीत्वं चेत् ,—लक्ष्यता पृथिवीत्वावच्छिन्ना, गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणम् ।

❀ दीपिका ❀

नाम्ना पदार्थसङ्कीर्तनमुद्देशः,—

—उद्देशक्रमे च सर्वत्रेच्छैव नियामिका ।

❀ परिमलः ❀

ग्रन्थस्यास्य हि त्रिविधा प्रवृत्तिः—उद्देशो, लक्षणं, परीक्षा चेति । तत्रोद्देशः पदार्थसङ्कीर्त्तनं, यथा—'द्रव्यं गुण' इत्यादि । लक्षणं यथा, गन्धवत्त्वं पृथिव्याः । लक्षितस्य लक्षणं सम्भवति न वेति विचारः—परित ईक्षणं च परीक्षा,—समीक्षारूपा, तदवान्तरभेदादिनिरूपणस्वरूपा च । तत्र पृथिव्या लक्षणमादावाहेत्याशयः । **उद्देश इति** । प्रकृतलक्षणीयवस्तुप्रतिपादकाऽभिन्नलक्ष्यतावच्छेदकावच्छिन्ननामकथनमात्रम्—उद्देशः, 'घट' इति लौकिके पदेऽतिव्याप्तिवारणाय वस्तुनि 'लक्षणीये'ति विशेषणम्, घटश्चात्र न लक्षणीयः, किन्तु—तर्का इति न दोषः । लक्षणीयस्य पृथिव्यादेः सामान्यतः प्रतिपादके प्रमेयपदेऽतिव्याप्तिवारणाय नामनि 'लक्ष्यतावच्छेदकावच्छिन्ने'ति विशेषणं, तादृशञ्च पृथिवीत्वाद्यवच्छिन्नपृथिव्यादिपदमेव, लक्षणवाक्येष्वपि पृथिव्यादिनामनिर्देशाल्लक्षणेऽतिव्याप्तिवारणाय 'मात्र'पदं, लक्षणेषु च न तावन्मात्रसङ्कीर्त्तनमपि तु ततोऽधिकमिति सर्वं समञ्जसम् ।

उद्देशक्रमे = पृथिवी-जल-तेजो-वाय्वादीनामेवं क्रमे, इच्छा = ग्रन्थकर्तुरिच्छा, एतेन—'जलस्य तेजसो वा प्रथमं निर्देशः कुतो ने'ति समाहितम् ।

❀ दीपिका ❀

ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः, न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम्, अवयवगन्धस्यैव तत्र भानसम्भवेन चित्रगन्धानङ्गीकारात्,—

—किञ्चोत्पन्नविनष्टघटादावव्याप्तिरिति चेन्न, गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्य विवक्षितत्वात्।

❀ परिमलः ❀

पृथिवीलक्षणस्याव्याप्तिमाशङ्कते—**नन्विति**। सुरभिः = शोभनगन्धः, असुरभिः = दुर्गन्धः, आरब्धे = जन्ये, द्रव्ये = घट-पटादौ, परस्परविरोधेन = सुगन्ध-दुर्गन्धयोः परस्परं विरोधेन परस्परं प्रतिबन्धात्,—गन्धानुत्पादात् = अवयविनि घटादौ गन्धानुत्पादात्, तत्र = विरुद्धगन्धारब्धे पटादौ, तादृशे च पटादौ गन्धभानन्तु प्रत्यक्षसिद्धमेव। **अवयवगन्धस्यैवेति**। विरुद्धगन्धवत्कपालाद्यवयवगतगन्धस्यैवेत्यर्थः। स्वाश्रयसमवेतत्वसम्बन्धेनाऽवयवगतगन्धस्य पटेऽवयविनि भानमिति तत्त्वं, स्वम्-अवयवगन्धः, तदाश्रयः—कपालाद्यवयवः, तत्र समवायेन वर्तमानत्वं घटाद्यवयविन इति समन्वयः। **चित्रगन्धेति**। विरुद्धगन्धद्वयारब्धविचित्रगन्धस्य, एवञ्च तादृशघटे गन्धाभावाद्गन्धवत्त्वरूपपृथिवीलक्षणस्याऽव्याप्तिरित्याशयः।

चित्रगन्धाङ्गीकारे त्वाह—**किञ्चेति**।

**उत्पन्नेति**। तादृशे घटे उत्पत्तिकाले गन्धाभावाद्, द्वितीयक्षणे च घटस्यैव नष्टत्वाद्गन्धवत्त्वस्य तत्राऽभावादव्याप्तिरित्यर्थः। **गन्धेति**। सामानाधिकरण्यम् = एकाधिकरणवृत्तित्वम्, अपरत्वं = व्याप्यत्वं, न्यूनदेशवृत्तित्वमिति यावत्, इत्थञ्च—गन्धाधिकरणवृत्ति-द्रव्यत्वव्याप्यजातिमत्त्वं पृथिव्या लक्षणं फलितम्। एवञ्चोत्पन्नविनष्टघटादौ तादृशपुष्पादिवृत्तिपृथिवीत्वजातेःसत्त्वाल्लक्षणसमन्वयः। द्रव्यत्वव्याप्य-जलत्व-जातिमत्त्वस्य जले सत्त्वादतिव्याप्तिरतो 'गन्धसमानाधिकरणे'ति। सत्ताजातिमादाय जलादाव-

❀ दीपिका ❀

**ननु जलादावपि गन्धप्रतीतेरतिव्याप्तिरिति चेन्न, अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात् ।**

❀ परिमलः ❀

तिव्याप्तिस्तद्वारणाय—'द्रव्यत्वापरे'ति । पृथिवीजलान्यतरत्वमादाय जलेऽतिव्याप्तिवारणाय—'जाती'ति ।

ननु व्याप्यत्वं स्वाभाववदवृत्तित्वम्, एवञ्च गन्धसमानाधिकरणद्रव्यत्वाभाववदवृत्ति-(-द्रव्यत्व-)जातिमत्त्वरूपपृथिवीलक्षणस्य जलादौ सत्त्वादतिव्याप्तिरिति चेन्न, व्याप्यत्वस्य [1]न्यूनदेशवृत्तित्वरूपस्य प्रकृते विवक्षणात्, तादृशद्रव्यत्वव्याप्यत्वस्य च पृथिवीत्वादावेव, (न द्रव्यत्वादौ) सत्त्वान्न दोषः। न चैवं गन्धाधिकरणवृत्तिद्रव्यत्वन्यूनवृत्तिघटत्वजातिमादाय सुवर्णघटेऽतिव्याप्तिरिति वाच्यम् । साक्षाद्द्रव्यत्वन्यूनवृत्तिजातेरेव विवक्षणात्, तादृशी च जातिः पृथिवीत्वमेव, न तु घटत्वं । वस्तुतो घटत्वं न जातिः, पृथिवीत्वादिना साङ्कर्यादिति दिक् । **गन्धप्रतीतेरिति** । 'सुरभि जल' मिति प्रतीतेः।

**अन्वयेति** । 'पृथिवीसम्बन्धसत्त्वे गन्धसत्त्वं, पृथिवीसम्बन्धाभावे गन्धाभाव'इत्यन्वयव्यतिरेकौ, तत्र = जले, स्वाश्रयसंयुक्तत्वसम्बन्धेनेति यावत्, स्वं = गन्धः, तदाश्रयः = पृथिवी, तत्संयुक्तत्वं–जले–इति समन्वयः। "ननु देशान्तरस्थकस्तूरीकुसुमसंबद्धपवनादावेतद्देशे कस्तूर्यादिसम्बन्धाभावाद्गन्धप्रतीत्यनुपपत्तिः, न च वाय्वानीतकस्तूरीत्र्यणुकादिसम्बन्धोऽस्त्येवेति वाच्यम्, कस्तूर्या न्यूनतापत्तेः, कुसुमादेः सच्छिद्रत्वापत्तेश्चेति चेन्न । भोक्तुः पुरुषादेरदृष्टविशेषेण पुनरपि त्र्यणुकान्तरोत्पत्तेरङ्गीकारेण कस्तूर्यादेर्न्यूनत्वा-

---

१ स्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वमिति यावत्, स्वं = द्रव्यत्वं, तदधिकरणवृत्तिभेदः—द्रव्यं नेति भेदो न संभवति, किन्तु पटो नेति भेदः, तत्प्रतियोगितावच्छेदकीभूता जातिः—पटत्वादिरूपा, न द्रव्यत्वजातिरिति तस्या न द्रव्यत्वन्यूनवृत्तिजातित्वमिति न तामादाय दोष इत्याशयः ।

**सा—द्विविधा, नित्याऽनित्या च, नित्या—परमाणुरूपा, अनित्या—कार्यरूपा ।**

**पुनस्त्रिविधा—शरीरेन्द्रियविषयभेदात् ।**

❀ दीपिका ❀

ननु तथापि कालस्य सर्वाधारतया सर्वेषां लक्षणानां तत्रातिव्याप्तिरिति चेन्न, सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धेन लक्षणस्याभिमतत्वात् ।

पृथिवीं विभजते—**सा द्विविधेति** । नित्यत्वं = ध्वंसाप्रतियोगित्वं, ध्वंसप्रतियोगित्वम्—अनित्यत्वम् ।

प्रकारान्तरेण विभजते—**पुनरिति** । आत्मनो भोगायतनं

❀ परिमलः ❀

पत्तिविरहात्, कर्पूरादौ चादृष्टविशेषानभ्युपगमान्न्यूनता स्वीक्रियत एवे"ति—धूर्जटि-दीक्षिताः ।

तथापि = गन्धवत्त्वलक्षणस्योत्पन्नविनष्टघटादावव्याप्त्यभावेऽपि, सर्वाधारतया = सकल-जन्यगन्धाद्याधारतया, सर्वेषां = पृथिव्यादिसकललक्षणानां, तत्र = काले, सर्वाधारताप्रयोजकसम्बन्धः = कालिकादिः, तद्भिन्नः = समवायादिः । एवञ्च—समवायेन गन्धवत्त्वस्यैव विवक्षणान्न दोषः, तथा च—समवायसम्बन्धावच्छिन्न - गन्धत्वावच्छिन्न—गन्धनिष्ठाधेयतानिरूपिताधिकरणतावद्वृत्तित्वविशिष्टा—या—द्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकीभूता जातिः—तादृशजातिमत्त्वं—पृथिवीलक्षणमिति निष्पन्नम् ।

**नित्यत्वमिति** । 'घटो ध्वस्त'इत्यादिध्वंसाप्रतियोगित्वमात्मादाविति लक्षणसमन्वयः । 'आत्मा ध्वस्त'इत्येवमात्मनो ध्वंसस्तु न प्रसिद्धः । 'घटो ध्वस्त'इत्यादिध्वंसप्रतियोगित्वं घटादाविति तेऽनित्याः ।

**विभजत इति** । अनित्यपृथिवीमिति शेषः, आयतनम् = अवच्छेदकं,

❀ दीपिका ❀

शरीरम्, यदवच्छिन्ने आत्मनि भोगो जायते तद्भोगायतनम्, सुख-दुःखान्यतरसाक्षात्कारो-भोगः। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे

❀ परिमलः ❀

यदवच्छिन्नः = शरीरावच्छिन्नः, भोगः आत्मनि भवति, तत् = शरीरं, एवञ्च सुख—दुःखान्यतरसाक्षात्कारावच्छेदकं शरीरमिति पर्यवस्यति। हस्तपादादीनामपि 'हस्ते मे पीडे'त्यादिप्रतीतेः सुखदुःखाद्यवच्छेदकत्वेन तत्रातिव्याप्तिनिरासायाऽ'न्त्यावयवित्वे सती'ति विशेषणं देयम्, 'अवयव-जन्यत्वे सत्यवयव्यजनकत्व'मन्त्यावयवित्वम्, द्रव्यान्तरानारम्भकद्रव्यत्व-मिति यावत्, तादृशञ्च शरीरमेव, न हस्तादिकं, हस्तादेरवयवस्य शरीर-रूपावयविजनकत्वादिति तत्त्वम्।

इन्द्रियलक्षणमाह–**शब्देतरेति**। शब्दादितरे ये उद्भूतविशेषगुणाः, तदनाश्रयत्वे सति—ज्ञानस्य कारणं यो मनःसंयोगः, तदाश्रयत्वमित्यर्थः। संयोगस्य द्विष्ठतया ज्ञानकारणमनः-संयोगाश्रयत्वस्यात्मन्यपि सत्त्वादति-व्याप्तिरतः 'शब्देतरे'त्यादि सत्यन्तम्। आत्मनि तु शब्दान्यसुखाद्युद्भूत-विशेषगुणानां सत्त्वान्न दोषः। श्रोत्रेन्द्रियस्य शब्दरूपविशेषगुणाश्रयतया-ऽव्याप्तिरतः—'शब्देतरे'त्युद्भूतगुणविशेषणम्। चक्षुरादावनुद्भूतरूपात्मक-शब्देतरविशेषगुणस्य सत्त्वेनाव्याप्तिरतः—**उद्भूतेति**। उद्भूतत्वस्य संयोग-विभागादावपि सत्त्वात् सर्वेषामेवेन्द्रियाणां शब्देतरोद्भूत–(–विषयेन्द्रिय-संयोगरूप–) सामान्यगुणाश्रयत्वादसंभवापत्तिरतो 'विशेष'पदं, संयोगस्तु न विशेषगुण इति न दोषः।

शब्देतरोद्भूतविशेषगुणानाश्रयत्वस्य समवायादिसम्बन्धेन कालेऽभा-वादतिव्याप्तिरतो 'ज्ञानकारणे'त्यादिविशेष्यदलं, तथा च ज्ञानकारणमनः-संयोगाश्रयत्वस्य समवायादिना कालेऽभावान्नातिव्याप्तिः। मनःसंयोगा-श्रयत्वस्य जगदाधारभूते कालेऽक्षतत्वात्पुनरप्यतिव्याप्तिरतो–'ज्ञानकारणे'ति।

**शरीरमस्मदादीनाम्, इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति।**

❀ दीपिका ❀

सति ज्ञानकारणमनःसंयोगाश्रयत्वम्—**इन्द्रियत्वम्** । शरीरेन्द्रियभिन्नो—**विषयः** । एवं च गन्धवच्छरीरं-पार्थिवशरीरम्, गन्धवदिन्द्रियं-पार्थिवेन्द्रियम्, गन्धवान् विषयः पार्थिवविषय इति तत्तल्लक्षणं बोध्यम । पार्थिवं शरीरं दर्शयति—**शरीरमिति**। इन्द्रियं दर्शयति—**इन्द्रियमिति** । 'गन्धग्राहक'मिति प्रयोजनकथनम्,

❀ परिमलः ❀

एवञ्च कालस्य जगदाधारत्वेऽपि सर्वदा ज्ञानापत्त्या तत्र ज्ञानकारणत्वविरहान्न दोषः—( विषयेन्द्रियसंयोगस्यैव ज्ञानकारणत्वात् । )

प्राचीनमते घटादिविषयावयवेन्द्रियावयवयोः संयोगस्यापि प्रत्यक्षजनकतया तदाश्रये इन्द्रियावयवेऽतिव्याप्तिवारणाय—'मनः'-पदं, नवीननये तु—काले रूपाभावप्रत्यक्षं चक्षुःसंयुक्तविशेषणतयेति—तादृशचक्षुःसंयुक्तविशेषणतासंनिकर्षघटक—चक्षुःसंयोगा—ऽश्रयतया रूपाभावप्रत्यक्षात्मक-ज्ञानकारण-संयोगाश्रये कालेऽतिव्याप्तिवारणाय 'मनः' पदम् ।

ननु 'आत्मान्यत्वे सती'त्येवोच्यतां किं'शब्देतरे'त्यादिगुरुतरनिवेशेनेति चेन्न, 'त्वङ्मनःसंयोगस्य ज्ञानमात्रं प्रति हेतुत्व'मिति मते चर्ममनःसंयोगेऽतिव्याप्त्यापत्तेरित्यलम् ।

**विषय इति** । शरीरेन्द्रियभिन्नत्वं विषयत्वमिति भावः । परमाणुरूपनित्यपृथिव्या अपि विषय एवान्तर्भावं वदन्तो 'नित्यपृथिवीसाधारणोऽयं विभाग' इति केचिदाचक्षते ।

एवञ्च = गन्धवत्त्वस्य पृथिवीमात्रलक्षणत्वे च, तत्तल्लक्षणं = पार्थिवशरीरादिलक्षणं, तथा च शीतस्पर्शवच्छरीरं जलीयशरीरमित्यादिरीत्याऽर्थो बोध्यः । **प्रयोजनेति** । गन्धवत्त्वमात्रमनुक्त्वा—'गन्धग्राहक'मिति

विषयो मृत्पाषाणादिः ॥९॥

शीतस्पर्शवत्य आपः। ता द्विविधाः, नित्या अनित्याश्च, नित्याः परमाणुरूपाः, अनित्याः कार्यरूपाः, पुनस्त्रिविधाः—शरीरेन्द्रियविषयभेदात्। शरीरं वरुणलोके

❀ न्यायबोधिनी ❀

एवं शीतस्पर्शवत्त्वादिलक्षणेषु जलादीनां लक्ष्यता, जलत्वादीनां लक्ष्यतावच्छेदकत्वं च बोध्यम् ॥ ९ ॥

❀ दीपिका ❀

'घ्राण'मिति संज्ञा, 'नासाग्रे'त्याश्रयोक्तिः, एवमुत्तरत्र ज्ञेयम्। पार्थिवविषयं दर्शयति—मृत्पाषाणेति।

अपां लक्षणमाह—शीतेति। उत्पन्नविनष्टे जलेऽव्याप्तिवारणाय—शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातित्वे तात्पर्यम्, 'शीतं शिलातलम्' इत्यादौ जलसम्बन्धादेव शीतस्पर्शभानमिति नातिव्याप्तिः, अन्यत्सर्वं पूर्वरीत्या व्याख्येयम्।

❀ परिमलः ❀

कथनात् गन्धग्राहकतया पार्थिवेन्द्रियसिद्धिरुपदर्शितेत्याशयः। उत्तरत्र = 'रसग्राहक'मित्यादावपि,

**'शीतस्पर्शसमानाधिकरणे'ति।** अत्र लक्षणे पृथिवीत्वादिकमादायातिव्याप्तिवारणाय—'शीतस्पर्शसमानाधिकरणे'ति। सत्तामादाय पृथिव्यादावतिव्याप्तिवारणाय—'द्रव्यत्वापरे'ति, तच्च न्यूनवृत्तित्वार्थकमित्यादि पूर्वोक्तरीत्या बोध्यम्। इत्यादावित्यनेन 'चन्दनं शीतल'मित्यादेः परिग्रहः। जलत्वजातिसिद्धिस्तु स्नेहजनकतावच्छेदकतया भवतीत्यवधेयम्। **अन्यत्सर्वमिति।** नित्यत्वानित्यत्व—जलीयशरीरादि—लक्षणजातं, पूर्वरीत्या = पृथिवीनिरूपणोक्तरीत्या बोध्यं, गन्धस्थाने शीतस्पर्शं निवेश्येति तत्त्वम्।

इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्त्ति, विषयः सरित्समुद्रादिः ॥१०॥

उष्णस्पर्शवत्तेजः। तद्द्विविधं नित्यमनित्यं च, नित्यं परमाणुरूपम्, अनित्यं कार्यरूपम्। पुनस्त्रिविधम्, शरीरेन्द्रियविषयभेदात्, शरीरमादित्यलोके, इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्त्ति। विषयश्चतुर्विधः—भौमदिव्योदर्याकरजभेदात्, भौमं वह्न्यादिकम्, [1]अबिन्धनं दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरुदर्यम्, आकरजं सुवर्णादि ॥११॥

❀ दीपिका ❀

तेजसो लक्षणमाह—उष्णस्पर्शवदिति। 'उष्णं जलम्' इति प्रतीतेस्तेजःसंबन्धानुविधायित्वान्नातिव्याप्तिः। विषयं विभजते—भौमेति।

ननु 'सुवर्णं पार्थिवम्, पीतत्वाद्गुरुत्वात्, हरिद्रावत्' इति चेन्न,

❀ परिमलः ❀

प्रतीतेः = जले उष्णत्वप्रतीतेः, तेजःसम्बन्धेति। 'तेजःसम्बन्धे उष्णत्वं, तेजःसम्बन्धाभावे उष्णत्वाभाव, इत्यन्वयव्यतिरेकानुविधायितये-त्यर्थः। नातिव्याप्तिः = जले नातिव्याप्तिः।

पीतत्वादिति—पार्थिवत्वसाधको हेतुः। ननु सुवर्णे विजातीयं पीतत्वं स्वीक्रियत इति तन्न पार्थिवत्वसाधकमत आह—गुरुत्वादिति। तैजसत्वाभावसाधकोऽयं हेतुः, तथा च "सुवर्णं न तैजसं, गुरुत्वात्पाषाणव" दिति प्रयोगः। अल्पानलसंयोगे द्रवत्वनाशादर्शनादाह—अत्यन्तेति।

---

१ आप एवेन्धनमुद्दीपकं यस्येत्यर्थः, जलसंघर्षाद्विद्युदुद्भवात्। भुक्तस्य = ओदनादेः, परिणामः = पाकः तत्र हेतुः = कारणम्, आकरः = खनिः।

❀ दीपिका ❀

अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाशदर्शनेन, जलमध्यस्थघृते द्रवत्वनाशादर्शनेन, असति प्रतिबन्धके पार्थिवद्रवत्वनाशाग्निसंयोगयोः कार्यकारणभावावधारणात्। सुवर्णस्य अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः, तस्मात् पीत-

❀ परिमलः ❀

**दर्शनेनेति** । "पार्थिवद्रवत्वनाशाऽग्निसंयोगयोः कार्यकारणभावकल्पना"दित्यन्वयः, तथा च—"पार्थिवद्रवत्वनाशं प्रत्यग्निसंयोगः कारण"-मिति कार्य-कारणभावः। ननु जलमध्यस्थघृतेऽत्यन्तानलसंयोगेऽपि पार्थिवद्रवत्वनाशादर्शनात्कथं कार्यकारणभाव इति चेदत आह—**असति प्रतिबन्धक इति** । एवञ्च जलादेः पार्थिवद्रवत्वनाशप्रतिबन्धकत्वकल्पनान्नोक्तकार्यकारणभावभङ्गप्रसङ्ग इति भावः। इत्थमन्वयव्यतिरेकात्कार्यकारणभावसिद्धौ यत्फलितं तदाह—**सुवर्णस्येति** । तथा चानुमानप्रयोगः "सुवर्णम्, अपार्थिवम्, असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वात् यन्नैवं तन्नैवं, यथा सर्पिः" इति। जलमध्यस्थसर्पिषि व्यभिचारवारणाय 'असति प्रतिबन्धक' इति। अग्निसंयोगाभाववति घृतादौ व्यभिचारवारणाय—'अग्निसंयोगे'ति। तस्मात् = सुवर्णेऽत्यन्तानलसंयोगे सत्यपि द्रवत्वनाशादर्शनात्, **पीतद्रव्येति** । सुवर्णगतोपष्टम्भकपीतपार्थिवभागगतद्रवत्वस्यात्यन्तानलसंयोगे सत्यप्यनुच्छिद्यमानतया—पार्थिवद्रवत्वनाशाऽग्निसंयोगयोः कार्यकारणभावस्य क्लृप्तस्य भङ्गप्रसङ्ग इति—तादृशद्रवत्वनाशप्रतिबन्धकीभूतं द्रव्यद्रव्यान्तरं स्वीकार्यं, तदेव तेज इति भावः। तथा चानुमानप्रयोगः "—अत्यन्ताऽनलसंयोगी पीतिमाश्रयः सुवर्णगतोपष्टम्भकः पार्थिवो भागः,—स्वगतद्रवत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः, अत्यन्तानलसंयोगे सत्यप्यनुच्छिद्यमानद्रवत्वाऽधिकरणत्वे सति गुरुत्वात्, जलमध्यस्थघृतादिवत्,—" इति। एवञ्च द्रवद्रव्यान्तरसिद्धिः।

रूपरहितस्पर्शवान्–वायुः, स द्विविधः—नित्योऽनि-

❀ दीपिका ❀

द्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ,— नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः, रूपवत्तया वाय्वादिष्वनन्तर्भावात्—तैजसत्वसिद्धिः । तस्योष्णस्पर्शभास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिः, तस्मात् 'सुवर्णं तैजस'मिति सिद्धम् ।

वायुं निरूपयति—रूपरहितेति । आकाशादावतिव्याप्तिवारणाय 'स्पर्शवा'निति । पृथिव्यादावतिव्याप्तिवारणाय 'रूपरहिते'ति ।

❀ परिमलः ❀

ननु तद् द्रवद्रव्यान्तरं जलमेवेति चेदत आह—नैमित्तिकेति । जलस्य हि स्वाभाविकं द्रवत्वं, न नैमित्तिकं, सुवर्णे चाग्निसंयोगादिनिमित्तकृतमेव द्रवत्वमिति सांसिद्धिकद्रवत्वाभावान्न तद् द्रव्यान्तरं जलं भवितुमर्हति, जले हि—"सांसिद्धिकं द्रवत्वन्तु' इत्यादिना स्वाभाविकद्रवत्वस्यैवाभ्युपगमात्–इति भावः । तथा च "तद् द्रवद्रव्यान्तरं न जलं, नैमित्तिकद्रवत्वाधिकरणत्वात्, यथा घृतादिक"मिति प्रयोगो बोध्यः । रूपवत्तयेति । एवञ्च न वाय्वादिषट्कमिति परिशेषात्तस्य तैजसत्वमिति सकलग्रन्थाशयः । ननु सुवर्णं न तैजसं, भास्वररूपोष्णस्पर्शयोरनुपलम्भादिति चेदत आह—तस्येति । सुवर्णस्येत्यर्थः । निष्ठत्वं षष्ठ्यर्थः । उपष्टम्भकः = अभिव्यञ्जकः, यः पार्थिवो भागः तस्य यौ रूपस्पर्शौ ताभ्यामित्यर्थः । अनुपलब्धिः—उष्णस्पर्शभास्वररूपयोरित्यन्वयः, बलवत्पार्थिवरूपस्पर्शाभ्यामभिभवादिति भावः । तस्मात् = परिशेषात् ।

रूपरहितेतीति । 'रूपरहितत्वे सति स्पर्शवत्त्वं' वायोर्लक्षणमित्यर्थः । स्थानभेदात् = हृदयादिस्थानभेदात्, 'उपाधिभेदा'दित्यस्य व्याख्यानमेतत् ।

त्यश्च, नित्यः-परमाणुरूपः। अनित्यः—कार्यरूपः, पुनस्त्रिविधः-शरीरेन्द्रियविषयभेदात्, शरीरं-वायुलोके। इन्द्रियं स्पर्शग्राहकं त्वक्-सर्वशरीरवर्ति, विषयो-वृक्षादिकम्पनहेतुः, शरीरान्तः-सञ्चारी वायुः-प्राणः, स चैकोऽप्युपाधिभेदात् प्राणापानादिसंज्ञां लभते ॥१२॥

❀ न्यायबोधिनी ❀

एवं पृथिव्यादित्रिकं निरूप्य वायुं निरूपयति—रूपरहितेति।

❀ दीपिका ❀

ननु प्राणस्य कुत्रान्तर्भाव इत्यत आह—शरीरेति। स चेति। एक एव प्राणः स्थानभेदात् प्राणापानादिशब्दैर्व्यवह्रियत इत्यर्थः।

स्पर्शानुमेयो वायुः,—तथा हि 'योऽयं वायौ वाति सति अनुष्णाशीतस्पर्शो भासते, स स्पर्शः क्वचिदाश्रितः, गुणत्वात्, रूपवत्'। न चास्य पृथिवी आश्रयः, उद्भूतस्पर्शवतः पार्थिवस्योद्भूत-

❀ परिमलः ❀

ननु वायुसत्त्वे किं मानमत आह—**स्पर्शेति**। अनुमानं दर्शयति—**तथा हीति**। वाति सति = प्रवहति सति, अनुष्णाऽशीतः = नात्युष्णो नातिशीतश्च, विजातीय इति यावत्। भासते = त्वगिन्द्रियेण प्रत्यक्षीक्रियते, अस्य = प्रत्यक्षमुपलभ्यमानस्य विलक्षणस्पर्शस्य, न च = नैव भवितुमर्हति, उद्भूतस्पर्शवतः = उत्कृष्टस्पर्शशालिनः,—पार्थिवभागस्य, **उद्भूतरूपेति**। वायौ वाति सति चोत्कृष्टस्पर्शप्रतीतावपि उद्भूतरूपाश्रयस्याभानम्, "यो य उद्भूतस्पर्शवान् पार्थिवभागः स उद्भूतरूपवान्, यथा शिलाशकल"मिति च व्याप्तिः, एवञ्च स्पर्शाश्रयोऽपि रूपशून्योऽयं न पृथिवीति सिद्धमिति भावः।

❀ न्यायबोधिनी ❀

रूपरहितत्वे सति स्पर्शवत्त्वं वायोर्लक्षणम् । सति सप्तम्या विशिष्टार्थकतया–सामानाधिकरण्यसम्बन्धेन [1]रूपत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टस्पर्श-

❀ दीपिका ❀

रूपवत्त्वनियमात् , न जलतेजसी, अनुष्णाशीतत्वात् । न विभु-चतुष्टयम् , सर्वत्रोपलब्धिप्रसङ्गात् । न मनः, परमाणुस्पर्शस्याती-न्द्रियत्वात्,—तस्माद् यः प्रतीयमानस्पर्शाश्रयः, स—वायुः ।

❀ परिमलः ❀

**जलतेजसी—इति** । 'अस्य स्पर्शस्य नाश्रयभूते' इति योजनीयम् । **अनुष्णेति** । जले शीतस्पर्शस्यैव, तेजसि उष्णस्पर्शस्यैव सत्त्वात्, अनुष्णाशीतस्पर्शस्य जलतेजसोरसम्भवादित्याशयः । विभुचतुष्टयम् = आकाश-कालदिगात्मचतुष्टयम्, **उपलब्धिप्रसङ्गादिति** । 'स्पर्शस्ये'त्यादिः, विभु-चतुष्टयस्य सर्वत्र सम्बन्धित्वेन सर्वदा तादृशविलक्षणस्पर्शानुभवप्रसङ्ग इत्याशयः ।

अथ स्यादेवं विभुगुणः स्पर्शस्तथापि न तस्य सर्वत्रोपलब्धिः, जन्य-मात्रस्यैव किञ्चित्कारणप्रकाश्यतया कारणास्खलनदशायां तदनुपलब्धेः सूपपादत्वादिति चेन्न । स्वाश्रयनाशजन्यनाशप्रतियोगि यत् तत्त्वेन स्पर्श-स्य विभुगुणत्वासम्भवादिति ध्येयं, (स्वं = जन्यगुणादि ।)

**मन इति** । 'स्पर्शाश्रय' इति शेषः । **परमाण्विति** । मनसोणुत्वात्त-

---

१. **रूपत्वावच्छिन्नेति** । रूपत्वेनावच्छिन्ना प्रतियोगिता यस्याभावस्य–स–'रूपत्वावच्छिन्नप्रतियोगिताकाभावः' । रूपाभावो हि–रूपत्वावच्छिन्नप्रतियोगिताकोऽभावः, वैशिष्ट्यञ्च स्पर्शे सामानाधिकरण्यसम्बन्धेन, तथा च—रूपत्वावच्छिन्नप्रतियोगिताका-भावसमानाधिकरण–स्पर्श–वत्त्वं वायोर्लक्षणं निष्पन्नम् । वायौ रूपाभावोऽस्त्येव स्पर्शोऽप्यस्त्येवेति — रूपत्वावच्छिन्नप्रतियोगिताकरूपाभावा-ऽधिकरणवृत्तिस्पर्शाऽधिकर-

❀ न्यायबोधिनी ❀

वत्त्वं वायोर्लक्षणम्। विशेषणांशानुपादाने स्पर्शवत्त्वमात्रस्य लक्षणत्वे पृथिव्यादित्रिकेऽतिव्याप्तिः, तत्रापि स्पर्शवत्त्वसत्त्वादतस्तद्वारणाय–विशेषणोपादानम्। तावन्मात्रोपादाने आकाशादावतिव्याप्तिः, तत्रापि रूपरहितत्वस्य सत्त्वादतस्तद्वारणाय विशेष्योपादानम् ॥१०॥

अतिव्याप्तिर्नाम–अलक्ष्ये लक्षणसत्त्वम्, यथा गोः शृङ्गित्वं लक्षणं

❀ दीपिका ❀

नतु 'वायुः प्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात्, घटवत्' इति चेन्न, उद्भूतरूपवत्त्वस्योपाधित्वात्,—

❀ परिमलः ❀

द्भूतस्पर्शस्याप्यप्रत्यक्षत्वप्रसङ्गादित्यर्थः। प्रत्यक्षः = बहिरिन्द्रियजन्यप्रत्यक्षविषयः, अनुद्भूतस्पर्शाश्रयत्वस्य त्वगिन्द्रिये सत्त्वेऽपि तस्याप्रत्यक्षत्वाद्व्यभिचारोऽत उक्तं—**प्रत्यक्षस्पर्शेति**। उद्भूतेत्यर्थः। **उपाधित्वादिति**। साध्यव्यापकत्वे सति साधनाव्यापको हि उपाधिः, यथा—'धूमवान् वह्ने'-रित्यत्रार्द्रेन्धनसंयोग उपाधिः, स हि 'यत्र यत्र धूमस्तत्रार्द्रेन्धनसंयोग' इति साध्यस्य धूमस्य व्यापकः, साधनस्य वह्नेरव्यापकश्च–अयोगोलके वह्निसत्त्वेऽपि आर्द्रेन्धनसंयोगाभावात्, तथा प्रकृते–'वायुः प्रत्यक्ष' इत्यादौ–बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वं साध्यम्, उद्भूतस्पर्शाश्रयत्वं हेतुरिति उद्भूतरूपवत्त्वमुपाधिः, तादृशप्रत्यक्षविषयत्वरूप-साध्य-व्यापकत्वस्य, उद्भूतस्पर्शाश्रयरूपहेत्वव्यापकत्वस्य च तत्रोपाधौ सत्त्वात्, वायावुद्भूतस्पर्शाश्रयत्वस्य हेतोः सत्त्वेऽपि तत्रोद्भूतरूपवत्त्वरूपोपाधेरभावादुपाधौ हेत्वव्यापकत्वस्याक्षतत्वात्। इत्थञ्चोद्भूतरूपवत्त्वस्योपाधित्वं सुघटम्, तथा चोद्भूतस्पर्शाश्रयत्वरूपे हेतौ उद्भूतरूपवत्त्वरूपोपाधिव्यभिचारेण साध्यव्यभिचारोन्नयनसम्भवान्न वायौ प्रत्यक्षत्वसिद्धिरिति भावः।

---

णत्वं तत्र सुलभमिति लक्षणसमन्वयः। विशेषणांशः = 'सामानाधिकरण्यसम्बन्धेन रूपत्वावच्छिन्नप्रतियोगिताकाभाव विशिष्ट'न्तो भागः। विशेष्यं = स्पर्शवत्त्वान्तम्।

❀ न्यायबोधिनी ❀

कृतं चेल्लक्ष्यभूतगोभिन्नमहिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात्। अव्याप्तिर्नाम—लक्ष्यैकदेशावृत्तित्वम्, लक्ष्यैकदेशे='लक्ष्यतावच्छेदकाश्रयीभूते क्वचिल्लक्ष्ये, लक्षणासत्त्वमव्याप्तिरित्यर्थः, यथा गोर्नीलरूपवत्त्वं लक्षणं कृतं चेल्लक्ष्यतावच्छेदकाश्रयीभूतश्वेतगवि अव्याप्तिस्तत्र नीलरूपाभावात्। असम्भवो नाम—लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम्,—यथा गोरेकशफवत्त्वं लक्षणं कृतं चेत्—गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वादसम्भवः ॥११॥

❀ दीपिका ❀

—'यत्र द्रव्यत्वे सति बहिरिन्द्रियप्रत्यक्षत्वं, तत्र उद्भूतरूपवत्त्वम्' इति—घटादौ साध्यव्यापकत्वम्, पक्षे साधनाव्यापकत्वम्। न चैवं तप्तवारिस्थतेजसोऽप्यप्रत्यक्षत्वापत्तिः, इष्टत्वात्,—
—तस्मात् रूपरहितत्वात् वायुरप्रत्यक्षः।

❀ परिमलः ❀

ननु नायमुपाधिः साध्यव्यापकः, रूपादौ तादृशप्रत्यक्षसत्त्वेऽपि तत्रोद्भूतरूपवत्त्वस्याभावादतः साध्यव्यापकत्वं व्यवस्थापयन्नाह—यत्र द्रव्यत्व इति। एवञ्च रूपादौ गुणे द्रव्यत्वविरह इति न तमादाय साध्यव्यापकत्वहानिरित्याशयः। घटादौ = घटादिरूपपृथिव्यन्तर्भावेण, 'उद्भूतरूपवत्त्वस्योपाधे'रिति शेषः। एवञ्च पक्षधर्म-द्रव्यत्वावच्छिन्नसाध्यव्यापकोऽयमुपाधिरिति उपाधिप्रकरणे स्फुटीकरिष्यते। पक्षे = वायौ, एवम् = उद्भूतरूपं विनोद्भूतस्पर्शाश्रयस्य प्रत्यक्षत्वानङ्गीकारे, तप्तवारीति। उष्णजलगताग्निस्वरूपस्य तेजसः, 'उद्भूतस्पर्शवत्त्वेऽप्युद्भूतरूपवत्त्वाभावा'दिति शेषः।

ननु परमाणुपुञ्जातिरिक्तस्यावयविनो घटादेरसत्त्वात्, परमाणूनाञ्च

१. लक्ष्यतावच्छेदकं—गोत्वादिकं, तदाश्रयः—श्वेता गौः, कुत्राऽपि = कस्यामपि लक्ष्यतावच्छेदकावच्छिन्नायां गवि।

❀ न्यायबोधिनी ❀

अतिव्याप्त्यव्याप्त्यसम्भावानां निष्कृष्टलक्षणानि तु—[1]लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः। अव्याप्तिस्तु—[2]लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ता-

❀ दीपिका ❀

इदानीं कार्यरूपपृथिव्यादिचतुष्टयस्योत्पत्तिविनाशक्रमः कथ्यते,—ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते, ततः परमाणुद्वयसंयोगे सति द्व्यणुकमुत्पद्यते, त्रिभिर्द्व्यणुकैः—त्र्यणुकम्, एवं चतुरणुकादिक्रमेण महापृथिवी, महत्य आपः, महत् तेजः, महान्वायुः—उत्पद्यते।

❀ परिमलः ❀

नित्यत्वात्पृथिव्यादीनां नित्यत्वानित्यत्वाभ्यां विभागोऽनुचित इत्याशङ्क्याह **इदानीमिति**। पृथिव्यादिचतुष्टयनिरूपणानन्तरं। **कार्यरूपेति**। उत्पादविनाशशालिघटाद्यात्मकेत्यर्थः। घटादेः परमाणुरूपत्वेऽतीन्द्रियत्वप्रसङ्गात्कार्यपृथिव्यादीनामतिरिक्तत्वमेवेत्याशयः। **उत्पत्तीति**। उत्पत्तिक्रमो विनाशक्रमश्चेत्यर्थः, क्रमः = प्रणाली, चिकीर्षावशात् = 'एकोऽहं बहु स्यां प्रजायेय' इत्येवं जगत्सिसृक्षावशात्, क्रिया = संयोगानुकूला क्रिया, ततः = क्रियानन्तरं, महापृथिवी = स्थूला घटादिरूपा पृथिवी उत्पद्यत इत्यन्वयः। एवमग्रेऽपि। एवम्

---

१. लक्ष्यतावच्छेदक—गोत्वा—ऽधिकरण-गो-वृत्तित्वमपि 'शृङ्गित्व'लक्षणेऽस्ति, लक्ष्यतावच्छेदकं—गोत्वं, तदवच्छिन्ना गौः, तत्प्रतियोगितानिरूपको भेदः—'गौर्नेति भेदः, 'तदधिकरणं महिष्यादयः, तद्वृत्तित्वमपि 'शृङ्गित्व'लक्षणेऽस्त्येवेति शृङ्गित्वं गोर्लक्षणमतिव्याप्तम्।

२. लक्ष्यतावच्छेदकगोत्वाधिकरणश्वेतगो-वृत्तिरत्यन्ताभावः—'नीलरूपवत्त्वं नास्ती'ति, तत्प्रतियोगित्वं—'नीलरूपवत्त्वे' इति तल्लक्षणमव्याप्तमुच्यत इत्याशयः।

❀ न्यायबोधिनी ❀

भावप्रतियोगित्वम् । असम्भवस्तु—'लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् ॥ १२ ॥

❀ दीपिका ❀

एवमुत्पन्नस्य कार्यद्रव्यस्य सञ्जिहीर्षावशात् क्रियया परमाणुद्वयविभागे सति—द्व्यणुकस्य नाशः, ततस्त्र्यणुकस्य, तद्वच्चतुरणुकस्य,—इत्येवं पृथिव्यादिनाशः ।

'असमवायिकारणनाशाद् द्व्यणुकनाशः, समवायिकारणनाशाद् त्र्यणुकनाश' इति—**सम्प्रदायः** ।

'सर्वत्र असमवायिकारणनाशाद् द्रव्यनाश' इति—**नवीनाः** ।

❀ परिमलः ❀

=अनया रीत्या, कार्यद्रव्यस्य = घटादेः, संजिहीर्षा = संहारेच्छा, 'ईश्वरस्ये'ति शेषः, क्रियया = संहारेच्छयोत्पन्नया परमाणुसमवेतया क्रियया ।

**द्व्यणुकस्य नाश इति** । परमाणुद्वयसंयोगरूपाऽसमवायिकारणनाशादित्यादिः । इत्येवं = चतुरणुकपञ्चाणुकादिनाशपरम्परया । अत्र किञ्चिद्विशेषमाह—**असमवायीति** । परमाणुद्वयसंयोगरूपाऽसमवायिकारणनाशात् द्व्यणुकनाशो, न तु समवायिकारणपरमाणुनाशात्, परमाणूनां नित्यत्वादित्यर्थः । **समवायीति** । द्व्यणुकरूपसमवायिकारणनाशात् त्र्यणुकनाशः, समवायिकारणस्य द्व्यणुकस्यानित्यत्वादित्यर्थः, सम्प्रदायः = प्राचीनमतम्, सर्वत्र = जन्यद्रव्यसामान्ये, न केवलं द्व्यणुके, त्र्यणुकादावपीति यावत्, असमवायिकारणनाशात् = परमाणुद्वयसंयोगस्य, द्व्यणुकादिसंयोगस्य च नाशात् । द्रव्यनाशः = त्र्यणुकादेरपि नाशः, अर्द्धजरतीयस्यानुचितत्वादित्याशयः ।

---

१. लक्ष्यतावच्छेदकगोत्वाधिकरणगोवृत्त्यन्ताभावः—गव्येकशफवत्त्वं नास्तीति, तत्प्रतियोगित्वम्—'एकशफवत्त्व'रूपे लक्षण इति तल्लक्षणमसम्भवदोषग्रस्तमुच्यते ।

❁ दीपिका ❁

किं पुनः परमाणुसद्भावे प्रमाणम् ?, उच्यते, "जालसूर्यमरीचिस्थं सूक्ष्मतमं यद् रजो दृश्यते तत्सावयवं, चाक्षुषद्रव्यत्वात्, पटवत्"। 'त्र्यणुकावयवोऽपि सावयवः, महदारम्भकत्वात् तन्तुवत्'। यो द्व्यणुकावयवः स एव परमाणुः, स च नित्यः, कार्यत्वेऽनवस्थाप्रसंगात्, तथा च मेरुसर्षपयोरपि तुल्यपरिमाणापत्तेः।

सृष्टिप्रलयसद्भावे 'धाता यथा पूर्वमकल्पयत्' इति श्रुतिः

❁ परिमलः ❁

**जालसूर्येति**। गवाक्षगतसूर्यकिरणसन्तानान्तर्भासमानं यत्—त्र्यणुकं, **चाक्षुषेति**। चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वे सति द्रव्यत्वादित्यर्थः, रूपादौ व्यभिचारवारणाय 'द्रव्यत्वा'दिति विशेष्यदलम्, आत्मनि व्यभिचारवारणाय सत्यन्तम्। **पटवदिति**। 'इत्येवमनुमानेन त्र्यणुकावयवसिद्धिसत्त्वे' इति शेषः, न चेदमप्रयोजकमिति वाच्यम्। त्र्यणुके महत्त्वस्य चाक्षुषत्वसम्पत्त्यर्थमावश्यकस्यावयवसंख्याजन्यतया तस्य सावयवत्वं विनाऽसम्भवात्। त्र्यणुकावयवः = द्व्यणुकं, **महदारम्भकेति**। महत्त्ववत्त्र्यणुकारम्भकत्वादित्यर्थः। **तन्तुवदिति**। 'इत्येवमनुमानेन द्व्यणुकस्याऽपि सावयवत्वे सिद्धे' इति शेषः, कार्यत्वे = परमाणोरनित्यत्वे, **अनवस्थेति**। परमाणोरप्यवयवास्तेषामप्यवयवास्तेषामपि पुनरवयवा इति रीत्याऽनवस्थेत्यर्थः।

**तुल्यपरिमाणापत्तेरिति**। अनन्तावयवत्वस्योभयत्र तुल्यत्वादिति भावः। एवञ्चावयवधारायाः कुत्रापि विश्रान्तिराश्रयणीया, यत्र च विश्रामः स एवास्माकं परमाणुर्नित्यश्चेत्याशयः।

**सृष्टिप्रलयेति**। जगत्प्रलयसत्त्वे, धाता = जगत्स्रष्टा, यथापूर्वं = प्रलयपूर्वजगत्सदृशम्, अकल्पयत् = पृथिव्यादिकं निर्ममे,—अनया श्रुत्या प्रलयसद्भावो दर्शितः। यत्किञ्चिद्घटादिद्रव्यध्वंसस्य सर्वदा सत्त्वात्तत्रावान्तर-

**शब्दगुणकमाकाशम् ।**

❀ न्यायबोधिनी ❀

आकाशं [1]लक्षयति—**शब्दगुणकमिति** । अत्र 'गुण' पदमकाशे शब्द एव विशेषगुण इति द्योतनाय, न त्वतिव्याप्तिवारणाय, समवायेन शब्दवत्त्वमात्रस्य सम्यक्त्वात् ।

"रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ।
बुद्धयादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ॥"

**तच्चैकमिति** । अनेकत्वे मानाभावादिति भावः, **विभ्विति** । सर्वमूर्तद्रव्यसंयोगित्वं-विभुत्वम् । मूर्तत्वं च क्रियावत्त्वम्, पृथिव्यप्तेजोवायुमनांसि मूर्तानि । पृथिव्यप्तेजोवाय्वाकाशेतिपञ्चकं 'भूत' पदवाच्यम्, भूतत्वं नाम [2]बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ॥१३॥

❀ दीपिका ❀

प्रमाणम् । सर्वकार्यद्रव्यध्वंसोऽवान्तरप्रलयः, सर्वभावकार्यध्वंसो महाप्रलयः—इति विवेकः ॥

आकाशं लक्षयति—**शब्दगुणकमिति** । ननु किमाकाशं

❀ परिमलः ❀

प्रलयव्यवहारवारणाय—'सर्वे' ति । नित्यद्रव्याणां ध्वंसाभावा'त्कार्ये' त्युक्तम् । पृथिव्यादिपरमाणूनां नित्यतया तद्गतरूपस्यावान्तरप्रलयेऽपि सत्त्वेन तद्ध्वंसाभावात्—'द्रव्ये' त्युक्तम् । अवान्तरप्रलयः = खण्डप्रलयः, सर्वपदार्थध्वंसस्य महाप्रलयेऽपि सत्त्वादाह—'भावेति' । ध्वंसस्तु न भाव इति न दोष इत्याशयः । विवेकः = विविच्य याथातथ्येन प्रतिपादनम् ।

आकाशं लक्षयति = आकाशस्य लक्षणमाह । 'भट्टमते शब्दस्य द्रव्यत्वेन तन्निरासाय 'गुण' पदमिति तु—**चन्द्रोदयकाराः** ।

---

१. अतिव्याप्त्यादिदोषत्रयशून्यकिञ्चिद्धर्मप्रकारकबोधानुकूलो व्यापारो लक्षयतेरर्थः ।

२ बहिरिन्द्रियैर्ग्राह्या ये विशेषगुणाः—रूप-रस-गन्ध-स्पर्शादयस्तद्वत्त्वं,—पृथिव्यादावस्त्येवेत्याशयः ।

## तच्चैकं,—

❁ दीपिका ❁

पृथिव्यादिवन्नाना ?, नेत्याह—**तच्चैकमिति**। भेदे प्रमाणाभावादित्यर्थः। एकत्वादेव सर्वत्रोपलब्धेर्विभुत्वमङ्गीकर्तव्यमित्याह—

❁ परिमलः ❁

एतेनाकाशे प्रमाणमुपदर्शितं, तथाहि—'शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्, यन्नैवं तन्नैवं यथा रूप'मिति परिशेषानुमानेन तादृशद्रव्यविधयाऽऽकाशसिद्धिः, रूपादिवारणाय सत्यन्तम्, रूपत्वादिवारणाय—विशेष्यदलम्, न च शब्दस्य द्रव्याश्रितत्वमेव कुत इति वाच्यम्, 'शब्दो द्रव्याश्रितः, गुणत्वात् संयोगव' दित्यनुमानेन शब्दस्य द्रव्यसमवेतत्वसिद्धेः, न चाष्टद्रव्यानाश्रितत्वसिद्धिः कुत इति वाच्यम्। 'शब्दोऽष्टद्रव्यानाश्रितः, श्रोत्रग्राह्यत्वात्, शब्दत्वव'-दित्यनुमानेन तत्सिद्धेः, ननु शब्दस्य गुणत्वे किं मानमिति चेच्छृणु,—'शब्दो गुणः, चक्षुर्ग्रहणाऽयोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात्, स्पर्शवत्'—इत्यनुमानेन गुणत्वसिद्धिः, घटादौ व्यभिचारवारणाय 'चक्षुर्ग्रहणायोग्ये' ति; आत्मनि व्यभिचारवारणाय—'बहिरिन्द्रियग्राह्येति'। रसत्त्वादिव्यावृत्तये 'जातिम'दिति—**नव्याः**।

'तच्चे'त्यत्र चस्त्वर्थे, **भेद इति**। घटाकाशादिव्यवहारस्यौपाधिकत्वेनावास्तविकतयाऽसाधकत्वाद्भेदे प्रमाणाभाव इत्याशयः। एकत्वात् = आकाशस्यैकत्वात्, नन्वेकत्वमात्रं न विभुत्वप्रयोजकं, घटत्वादिजातेरेकत्वेऽपि विभुत्वानङ्गीकारादतो विभुत्वे हेत्वन्तरमाह—**सर्वत्रेति**। सर्वदिगवच्छेदेनेत्यर्थः, उपलब्धेः = उपलभ्यमानत्वात्, ननु 'सर्वत्रोपलब्धे'रित्येव विभुत्वे साधकमस्तु, किमेकत्वादिति हेत्वन्तरमिति चेन्न। धूलीपटलस्थपरमाण्वादीनां सर्वदिगवच्छेदेनोपलब्धेस्तन्निरासाय तदावश्यक-

—विभु, नित्यं च ॥१३॥

**अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च।**

❀ न्यायबोधिनी ❀

कालं लक्षयति—**अतीतेति**। व्यवहारहेतुत्वस्य लक्षणत्वे 'घट' इति व्यवहारहेतुभूतघटादावतिव्याप्तिः, तद्वारणाय 'अतीतादी'ति विशेषणोपादानम् ॥१४॥

❀ दीपिका ❀

**विभ्विति**। सर्वमूर्तद्रव्यसंयोगित्वं-विभुत्वम्। मूर्तत्वं-परिच्छिन्नपरिमाणवत्त्वं, क्रियावत्त्वं वा। विभुत्वादेव आत्मवन्नित्यत्वमित्याह—**नित्यं चेति**।

कालं लक्षयति—**अतीतेति**। सर्वाधारः कालः, सर्वकार्यनिमित्तकारणञ्च।

❀ परिमलः ❀

त्वात्, परमाणूनाञ्चानेकत्वान्न विभुत्वमिति—नृसिंहः। **मूर्त्तेति**। पृथिव्यप्तेजोवायुमनांसि—मूर्त्तद्रव्याणि। **परिच्छिन्नेति**। अपकृष्टपरिमाणवत्त्वमित्यर्थः। लाघवाल्लक्षणान्तरमाह—**क्रियावत्त्वमिति**। 'क्षितिर्जलन्तथा तेजः पवनो मन एव च। परा-परत्व-मूर्त्तत्व-क्रिया-वेगाश्रया अमी'त्युक्तेः क्रियाश्रयत्वस्य क्षित्यादिषु लाभात्। **नित्यत्वमिति**—आकाशस्येति शेषः।

**अतीतेति**। आदिना वर्त्तमान—भविष्यतोर्ग्रहणम्, अतीतत्व—वर्त्तमानध्वंसप्रतियोगित्वं, वर्त्तमानत्वम्—'इह घटोऽस्ती'त्यादिशब्दप्रयोगाधिकरणकालवृत्तित्वं, भविष्यत्त्वञ्च—वर्त्तमानप्रागभावप्रतियोगित्वम्। 'इह घटोऽभूत्' 'घटो भविष्यती'त्यादिशब्दप्रयोगरूपव्यवहारं प्रति कालस्य कारणत्वात्—अतीतादिव्यवहाराऽसाधारणकारणत्वं कालस्य लक्षणं सूपपन्नम्। आकाशेऽतिव्याप्तिनिरासाय 'कारण'पदेन निमित्तकारणं विवक्षणीयम्, कण्ठताल्वाद्यभिघातेऽतिव्याप्तिवारणाय 'विभुत्वे सती'ति देयमिति सङ्क्षेपः।

**सर्वाधार इति**। 'कालिकसम्बन्धेने'त्यादिः। **निमित्तकारण-**

**प्राच्यादिव्यवहारहेतुर्दिक्, सा चैका, नित्या, विभ्वी च । ज्ञानाधिकरणमात्मा, स द्विविधः—परमात्मा, जीवात्मा चेति । तत्रेश्वरः सर्वज्ञः परमात्मैक एव ।**

❀ न्यायबोधिनी ❀

दिशो लक्षणमाह—**प्राच्येति** । उदयाचलसन्निहिता या दिक् सा—प्राची, अस्ताचलसन्निहिता या दिक् सा,—प्रतीची । मेरोः सन्निहिता या दिक् सोदीची । मेरोर्व्यवहिता या दिक् साऽवाची ॥१५॥

आत्मानं निरूपयति—**ज्ञानाधिकरणमिति** । अधिकरणपदं समवायेन[1] ज्ञानाश्रयत्वलाभार्थम् ॥१६॥

❀ दीपिका ❀

दिशो लक्षणमाह—**प्राचीति** । दिगपि कार्यमात्रे निमित्तकारणम् ।

आत्मनो लक्षणमाह—**ज्ञानेति** । आत्मानं विभजते—**स द्विविध इति** । परमात्मनो लक्षणमाह—**तत्रेति** । नित्यज्ञानाधिकरणत्वम्—ईश्वरत्वम् ।

❀ परिमलः ❀

**मिति** । 'समवाय्यसमवायिकारणभिन्नं निमित्तकारण'मिति तल्लक्षणं स्फुटीभविष्यति । **प्राच्यादीति** । यस्य पुंस उदयाचलसन्निहितदेशाद्यवच्छिन्ना या दिक्—सा तं प्रति प्राची, उदयाचलाऽसन्निहितदेशावच्छिन्ना दिक्—प्रतीची, सुमेरुसन्निहितदेशावच्छिन्ना दिक्—उदीची, सुमेरुविप्रकृष्टमूर्त्तावच्छिन्ना दिक्—अवाचीति सर्वत्र तत्तत्पुरुषान्तर्भावेण दिग्व्यवहार इति विवेकः ।

**नित्येति** । समवायेन नित्यज्ञानेच्छाद्यधिकरणत्वमित्यर्थः । चार्वाक-

---

१ भूतलादिवारणाय-'ज्ञाने'ति, कालादिवारणाय 'समवाये'ति ।

❀ दीपिका ❀

नन्वीश्वरस्य सद्भावे किं प्रमाणं ?, न तावत्प्रत्यक्षम्, तद्धि बाह्यं, आभ्यन्तरं वा ? नाद्यः,—अरूपिद्रव्यत्वात्, नान्त्यः,—आत्म-सुखादिव्यतिरिक्तत्वात्, नाप्यनुमानम्—लिङ्गाभावात्, नाप्यागमः, तथाविधागमाभावादिति चेन्न। 'क्षित्यङ्कुरादिकं कर्तृजन्यं, कार्यत्वात्, घटवत्'इत्यनुमानस्य प्रमाणत्वात्। उपादानगोचरापरोक्ष-ज्ञान-चिकीर्षा-कृतिमत्त्वं,—कर्तृत्वम्, उपादानं = समवायिकारणम्, सकलपरमाण्वादिसूक्ष्मदर्शित्वात्सर्वज्ञत्वम्। 'यः सर्वज्ञः स सर्ववित्',—इत्यागमोऽपि प्रमाणम्।

❀ परिमलः ❀

मतेनाशङ्कते—**नन्विति**। प्रत्यक्षं—'प्रमाण'मिति शेषः। तद्धि = प्रत्यक्षं प्रमाणं हि, बाह्यं = बहिरिन्द्रियजन्यम्, आभ्यन्तरं = मानसप्रत्यक्षं, अरूपिद्रव्यत्वात् = रूपादिशून्यद्रव्यत्वात्, चाक्षुप—स्पार्शन—घ्राणजादि-भेदभिन्नस्य बाह्यप्रत्यक्षस्य रूप-रस-स्पर्श-गन्धादिशून्येऽनङ्गीकादित्यर्थः। यद्वा—बाह्यप्रत्यक्षमात्रं प्रति उद्भूतरूपस्य हेतुतया तद्रहितस्येश्वरस्य बाह्यप्रत्यक्षानुपपत्तिरित्यर्थः। **नान्त्य इति**। मानसप्रत्यक्ष मपीश्वरे न मानमित्यर्थः। सुख—दुःखादिभिन्नस्येश्वरस्य मानसप्रत्यक्षाविषयत्वात्, सुखदुःखादेरेव मानसप्रत्यक्षविषयत्वादित्याशयः। 'स्वसमवायिसमवेतत्वरूपविलक्षणसम्बन्धाधिकरणत्वस्य सुखादावेव सत्त्वात्,—परमात्मनि तदभावात्, लिङ्गाऽभावात् = ईश्वरानुमापकहेतोरभावात्। आगमाभावात् = ईश्वरबोधकवेदाभावात्, चार्वाकमतं निरस्यति—**नेति**। **उपादानेति**। कार्यसमवायिकारणविषयकप्रत्यक्षात्मकं यज्ज्ञानं, या च तादृशी चिकीर्षा, तादृशी च या कृतिस्तद्वत्त्वमित्यर्थः।

१ स्वम् = मानसप्रत्यक्षकारणीभूत आत्ममनः संयोगः, तत्समवायी—आत्मा, तत्समवेतत्वं—सुखे, नेश्वर इत्याशयः।

## जीवात्मा प्रतिशरीरं भिन्नो, विभुर्नित्यश्च ॥१६॥

❀ दीपिका ❀

जीवस्य लक्षणमाह—**जीवेति** । सुखादिकं जीवलक्षणं, ननु 'मनुष्योऽहं ब्राह्मणोऽह'मित्यादौ सर्वत्राहम्प्रत्यये शरीरस्यैव विषयत्वाच्छरीरमेवात्मेति चेन्न, शरीरस्य करपादादिनाशे शरीरनाशा-

❀ परिमलः ❀

ईश्वरस्य च—'यः सर्वज्ञः'—इत्यादिश्रुतिबोधितं क्षित्यङ्कुरादिरूपकार्यसमवायिकारणसकलपरमाण्वादिसूक्ष्मवस्तुविषयकप्रत्यक्षशालित्वं', तथा च तादृशी च चिकीर्षा = 'परमाणुयुगलेन द्व्यणुकं सृजामो'त्याद्याकारिका, या च कृतिः—द्व्यणुकाङ्कुरादिविषयिणी, तद्वत्त्वमीश्वरे—इति समन्वयः' । **प्रमाणमिति** । ईश्वरे, तस्य सर्वज्ञत्वे च प्रमाणमित्यर्थः । सर्वविषयकसामान्यज्ञानस्य ईश्वरातिरिक्तेऽपि सत्त्वात्—सर्ववित्त्वं = सर्वविषयकविशेषज्ञानशालित्वं ग्राह्यं, तच्चेश्वर एव नान्यत्रेत्याशयः ।

'लक्षणमाहे'त्यस्य' स्वरूपमाहेत्यर्थः । 'प्रतिशरीरं भिन्नत्वे सति विभुत्वे च सति नित्यत्व'मित्येतस्य मूलस्य लक्षणपरत्वन्तु—शरीरावच्छिन्नाकाशमादाय गगनेऽतिव्याप्तेर्न सम्भवति ।

शरीरात्मवादी चार्वाकः शङ्कते—**नन्विति** । अहम्प्रत्यये = अस्मच्छब्दजन्यप्रतीतौ । मनुष्यत्वादेः शरीरधर्मत्वात् शरीरं विषयीकृत्यैवात्र सर्वत्रास्मच्छब्दप्रयोग इति भावः । **शरीरस्येति** । शरीरघटकीभूतहस्तचरणादिभङ्गे—( शरीरसमवायिकारण-हस्तादिनाशाच्छरीरनाशे— ) आत्मनोऽपि नाशप्रसङ्ग इति ग्रन्थाशयः ।

---

१ ज्ञायमानस्यैव हि कारणस्य कार्ये हेतुत्वं, तथा चाङ्कुरादिसकलकार्यकारणीभूतपरमाणुप्रत्यक्षज्ञानचिकीर्षादिना कार्यमात्रोत्पादकत्वमीश्वरस्येति भावः ।

'यत्र कार्यत्वं तत्र कर्तृजन्यत्व'मिति व्याप्तेः प्रसिद्धतया'ऽङ्कुरादिकं कार्यं कर्तृजन्यं, कार्यत्वाद्घटव'दित्यनुमानेन कर्तृजन्यत्वसिद्धेः, तत्कर्तृत्वेनेश्वरसिद्धिरिति हृदयम् ।

❀ दीपिका ❀

दात्मनोऽपि नाशापत्तेः, नापि इन्द्रियाणामात्मत्वम्, तथात्वे 'योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामी'त्यनुसन्धानाभावप्रसङ्गात्, अन्यानुभूतेऽन्यस्यानुसन्धानायोगात्, तस्माद्देहेन्द्रियव्यतिरिक्तो-जीवः, सुखादिवैचित्र्यात् प्रतिशरीरं भिन्नः, स च न परमाणु-परिमाणः, शरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गात्, न मध्यमपरि-माणः, तथा सति अनित्यत्वप्रसङ्गेन कृतहानाऽकृताभ्यागमप्रसङ्गात्, —तस्मान्नित्यो विभुर्जीवः ।

❀ परिमलः ❀

इन्द्रियाणामात्मत्वं निरस्यति—**नाऽपीति** । तथात्वे = इन्द्रियाणां चक्षुरादीनामेवात्मत्वे, अनुसन्धानाऽभावे हेतुमाह—**अन्येति** । अन्यानुभूते = चक्षुषाऽनुभूते घटादौ, अन्यस्य = त्वगिन्द्रियादेः, अनुसन्धानं = 'सोऽहं'-मित्यादि प्रत्यभिज्ञा, [1]अन्यथा चैत्रानुभूतं मैत्रोऽप्यनुसन्दध्यादिति भावः ।

तस्मात् = शरीरेन्द्रियादीनामात्मत्वाऽसम्भवात्, व्यतिरिक्तः = भिन्नः, सुखादिवैचित्र्यात् = प्रतिशरीरं सुख-दुःखेच्छा-कृत्यादीनां विभिन्नत्वात्, स च = जीवात्मा च, **शरीरव्यापीति** । पुत्रकान्तासङ्गजन्येत्यर्थः । मध्यम-परिमाणः = शरीरादितुल्यपरिमाणः, तथा सति = शरीरतुल्यपरिमाणशालित्वे सति, मध्यमपरिमाणस्याऽनित्यत्वं प्रसिद्धमेव, 'यन्मध्यमपरिमाणं द्व्यणुकादि तदनित्यं, यथा घट' इति व्याप्तेः । **कृतेति** । कृतस्य = यागादिना निष्पा-दितस्य धर्मस्य, हानं = नाशः, अकृतस्य = अनाचरितस्य, अभ्यागमः = प्राप्तिः । कर्त्तुरात्मनोऽन्यस्मिञ्जन्मन्यसत्त्वात्पूर्वजन्मकृतयागादिजन्यधर्मादे-वैयर्थ्यप्रसङ्गः, जातस्यात्मनो जन्मान्तरसम्बन्धाभावेनाकर्त्तुरपि भोक्तृत्वे-ऽकृतपुण्यपापभोक्तृत्वापत्तेश्चात्मनोऽनित्यत्वं नोचितं, किन्तु नित्यत्वमेवेत्या-

---

१ चक्षुषा दृष्टस्य त्वचा प्रत्यभिज्ञाने,

**सुखाद्युपलब्धिसाधनमिन्द्रियं—मनः, तच्च प्रत्यात्म-[1]नियतत्वादनन्तं, परमाणुरूपं, नित्यं च ॥१७॥**

❀ न्यायबोधिनी ❀

मनो निरूपयति—**सुखादीति** । उपलब्धिर्नाम—साक्षात्कारः । तथा च सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वं मनसो [2]लक्षणम् । 'इन्द्रियत्व'मात्रोक्तौ चक्षुरादावतिव्याप्तिः । अतः सुखादिसाक्षात्कारकारणत्व-विशेषणम् । विशेष्यानुपादाने आत्मन्यतिव्याप्तिः, आत्मनः सुखादिकं प्रति समवायिकारणत्वात्; अत इन्द्रियत्वरूपविशेष्योपादानम् ॥१७॥

❀ दीपिका ❀

मनसो लक्षणमाह—**सुखेति** । स्पर्शरहितत्वे सति क्रिया-वत्त्वं मनसो लक्षणम् । मनो विभजते—**तच्चेति** । एकैकस्यात्मन एकैकं मन आवश्यकमित्यात्मनामनेकत्वान्मनसामप्यनेकत्वमित्यर्थः। **परमाणुरूपमिति** । मध्यमपरिमाणवत्त्वेऽनित्यत्वप्रसङ्गादित्यर्थः ।

❀ परिमलः ❀

शयः । **मन इति** । सुखाद्युपलब्धिसाधनत्वे सतीन्द्रियत्वमित्यर्थः । मनः-संयोगेऽतिव्याप्तिवारणाय विशेष्यम्, चक्षुरादौ तद्वारणाय विशेषणम् । लाघवादाह—**स्पर्शेति** । आकाशेऽतिव्याप्तिवारणाय[3]—'क्रियावत्त्वं,' वायावतिव्याप्तिवारणाय–'स्पर्शरहितत्वे सती'ति । आत्मनः = जीवात्मनः,

---

१. आत्मानमात्मानं प्रतीति—प्रत्यात्मं, तस्मिन्—नियतत्वात् = नियमेन वर्त्तमानत्वात् ।

२. 'सुखादिसाक्षात्कारः करणसाध्यः, जन्यसाक्षात्कारत्वात् चाक्षुषादिव' दित्यनु-मानेन चक्षुरादीनां तत्करणत्वबाधान्मनः सिध्यति, ।

३. पृथिव्यप्तेजो-वायुमनसामेव क्रियाश्रयत्वादाकाशस्यातथात्वमिति भावः ।

❀ दीपिका ❀

ननु 'मनो विभु, स्पर्शरहितद्रव्यत्वात्, आकाशदिव' दिति चेन्न, मनसो विभुत्वे आत्ममनःसंयोगस्याऽसमवायिकारणस्याभावाज्ज्ञानानुत्पत्तिप्रसङ्गात्; न च विभुद्वयसंयोगोऽस्त्विति वाच्यं, तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात्, पुरीतद्व्यतिरिक्तप्रदेशे आत्ममनःसंयोगस्य सर्वदा विद्यमानत्वात्। अणुत्वे तु यदा मनः पुरीतति नाड्यां प्रविशति, तदा सुषुप्तिः, यदा निःसरति, तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः।

❀ परिमलः ❀

मीमांसकमतेनाशङ्कते—**नन्विति**। असमवायिकारणस्य = ज्ञानासमवायिकारणस्य, अभावात् = असम्भवात्, विभुद्वयसंयोगस्यानङ्गीकारात्, आत्ममनसोश्च तव मते विभुत्वादिति भावः। **ज्ञानानुत्पत्तिप्रसङ्गादिति**। भावकार्यस्यासमवायिकारणजन्यत्वनियमेनात्ममनःसंयोगरूपाऽसमवायिकारणाऽसम्भवे ज्ञानरूपभावकार्यानुत्पादप्रसङ्गापत्तेर्न मनो विभु, तथा चात्ममनःसंयोगस्य ज्ञानाऽसमवायिकारणस्य सम्भवान्न दोष इत्याशयः।

ननु संयोगानुकूलक्रियाया असम्भवाद्विभुद्वयस्य संयोगो नेत्युच्यते, तथाऽपि प्रकृते ज्ञानोत्पत्तिसम्पत्तये नित्योऽपि विभुद्वयसंयोगः स्वीक्रियते, नित्ये चासमवायिकारणक्रियाविरहेऽपि न दोष इत्याशङ्क्याह—**तत्संयोगस्येति**। विभुद्वयसंयोगस्येत्यर्थः। सुषुप्तिः=पुरीतन्नामकनाड्यतिरिक्तप्रदेशावच्छेदेनात्ममनःसंयोगाभावः, आत्ममनसोर्विभुत्वे तु सर्वदा पुरीतन्नामकनाडीविशेषातिरिक्तप्रदेशे आत्ममनःसंयोगस्य सत्त्वात्सुषुप्त्यभावप्रसङ्गात् = सर्वदा ज्ञानोदयप्रसङ्गादित्याशयः। **सर्वदेति**। सर्वमूर्त्तसंयोगित्वस्यैव विभुत्वादिति भावः। अणुत्वे तु—परमाणुरूपत्वे तु, पुरीतति = तन्नामिकायां,—नाड्यां, **ज्ञानोत्पत्तिरिति**। पुरीतद्व्यतिरिक्तप्रदेशावच्छिन्नात्ममनःसंयोगस्य ज्ञानसामान्यं प्रति कारणत्वादिति भावः।

॥ इति द्रव्यनिरूपणम् ॥



**चक्षुर्मात्रग्राह्यो गुणो रूपम्, तच्च शुक्ल-नील-पीत-रक्त-**

❀ न्यायबोधिनी ❀

रूपं लक्षयति—**चक्षुरिति** । 'चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वं रूपस्य लक्षणम्, विशेष्यमात्रोपादाने रसादावतिव्याप्तिः, अत 'श्चक्षुर्मात्रग्राह्यत्व' विशेषणम्, तावन्मात्रोपादाने रूपत्वेऽतिव्याप्तिः,—'यो गुणो यदिन्द्रिय-

❀ दीपिका ❀

रूपं लक्षयति—**चक्षुरिति** । संख्यादावतिव्याप्तिवारणाय 'मात्र'पदम् । रूपत्वेऽतिव्याप्तिवारणाय 'गुण'पदम् । रूपं विभजते—**तच्चेति** । नन्वव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपमिति चेन्न,

❀ परिमलः ❀

**मात्रपदमिति** । संख्यादेस्तु त्वगिन्द्रियेणापि ग्रहणान्न चक्षुर्मात्र-ग्राह्यत्वमिति भावः । तथा च चक्षुर्भिन्नेन्द्रियजन्यलौकिकप्रत्यक्षाऽविषयत्वे सति, चक्षुरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वे सति, गुणत्वव्याप्यजातिमत्त्व-मिति लक्षणं फलितम्, विस्तरस्तु न्यायबोधिन्यां द्रष्टव्यः । **रूपत्व इति** । रूपत्वस्यापि चक्षुरिन्द्रियेण ग्रहणात्तत्रातिव्याप्तिः, 'गुण'पदोपादाने तु रूपत्वस्य जातितया गुणत्वाभावान्न दोष इत्याशयः ।

ननु 'चित्ररूपे मानाभावात् षड्विधमेव रूप'मित्याशङ्कते—**नन्विति** । अव्याप्यवृत्तीनि* यानि नील–पीत–रक्त–हरितादीनि, तत्समुदाय एव

---

* व्याप्यवृत्तित्वञ्च—स्वात्यन्ताभावसामानाधिकरणत्वम्, स्वं—संयोगः । अभाव-विशिष्टत्वमिति यावत्, वैशिष्ट्यञ्च स्वप्रतियोगित्व, स्वसामानाधिकरण्योभयसम्बन्धेन । स्वं = मूलावच्छिन्नकपिसंयोगाभावः ।

१. 'चक्षुर्मात्रग्राह्यत्वे सति गुणत्व'मित्येवं फलिते रूपलक्षणे सति सप्तम्या विशिष्टाऽर्थकतयाह—'विशिष्टे'ति । वै० सामानाधिकरण्यसम्बन्धेन । **विशेष्यमा-त्रेति** । गुणत्वमात्रेत्यर्थः । रसश्च न चक्षुषो विषयः, रूपत्वस्यापि चक्षुर्ग्राह्यत्वात्त-द्वारणाय—'गुणत्व'मिति । रूपत्वन्तु न गुणः, किन्तु जातिः । यो गुणः =

❀ न्यायबोधिनी ❀

ग्राह्यस्तन्निष्ठा जातिस्तदिन्द्रियग्राह्ये'ति नियमात्तद्वारणाय विशेष्योपादानम्। चक्षुर्मात्रग्राह्यत्वं नाम-चक्षुर्भिन्नेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्। 'मात्र' पदानुपादाने संख्यादिसामान्यगुणेऽतिव्याप्तिः, तत्रापि चक्षुर्ग्राह्यत्वविशिष्ट-गुणत्वस्य सत्त्वात्, अतस्तद्वारणाय 'मात्र'पदम्' संख्यादेश्चक्षुर्भिन्न-त्वगिन्द्रियग्राह्यत्वाच्चक्षुर्मात्रग्राह्यत्वं नास्ति। अतीन्द्रियगुरुत्वादावतिव्याप्ति-वारणाय 'चक्षुर्ग्राह्ये'ति।

अत्र लक्षणे 'ग्राह्यत्वं' नाम प्रत्यक्षविषयत्वम्, 'अग्राह्यत्वं' नाम तद-विषयत्वम्, तथा च चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुर्जन्य-प्रत्यक्षविषयत्वमिति फलितोऽर्थः।

❀ दीपिका ❀

रूपस्य व्याप्यवृत्तित्वनियमात्। ननु चित्रपटेऽवयवरूपस्य प्रतीति-

❀ परिमलः ❀

चित्ररूपं न त्वतिरिक्तमित्याशयः। समाधत्ते—**नेति**। **व्याप्यवृत्ति-त्वेति**। तथा च पटे व्याप्यवृत्तिनीलरूपसत्त्वे पीतरूपासंभवात्, पीत-रूपसत्त्वे च श्वेतरूपासम्भवान्न नानारूपसमुदाय एव चित्ररूपम्, अतो-ऽतिरिक्तं चित्रं रूपं स्वीकार्यमेवेत्याशयः। ननु 'चित्रं रूपं न स्वीक्रियते, नानातन्तुगतनानानीलपीतादि-रूप-प्रत्ययादेव पटे रूपवत्ताप्रतीतिः, न तु तत्र पटे रूपान्तरमस्ति, एवञ्च नीलादीनां व्याप्यवृत्तितयैकत्र पटे तत्स-मुदायासम्भवेऽपि न क्षति'रित्याशङ्कते—**नन्विति**। समाधत्ते—**नेति**।

---

रूपादिः, यदिन्द्रियग्राह्यः = चक्षुरादीन्द्रियग्राह्यः, तन्निष्ठा = रूपादिनिष्ठा, जातिः = रूपत्व-रसत्वादिः, तदिन्द्रियग्राह्या = चक्षुरादिग्राह्या, तद्वारणाय = रूपत्वेऽतिव्याप्ति-वारणाय, वारणायेति। विशेष्योपादानं = 'गुणत्व'निवेशः, संख्यादीनां द्वीन्द्रियग्राह्यत्वा-च्चक्षुर्मात्रग्राह्यता नास्तीत्याशयः। 'चक्षुर्भिन्नेन्द्रियाग्राह्यत्व'मात्रस्यैव 'चक्षुर्मात्रग्राह्य-त्वा'र्थत्वे,—गुरुत्वस्यातीन्द्रियतया चक्षुर्भिन्नेन्द्रियाऽग्राह्यत्वात्तत्राऽतिव्याप्तिः,—'चक्षुर्ग्रा-

❀ न्यायबोधिनी ❀

ननु प्रभाघटसंयोगे रूपलक्षणस्यातिव्याप्तिस्तस्य चक्षुर्मात्रग्राह्यगुणत्वादिति चेन्न, 'गुण'पदस्य विशेषगुणपरत्वात्। न चैवं विशेषगुणत्वघटित-

❀ दीपिका ❀

रस्त्विति चेन्न, रूपरहितत्वेन पटस्याप्रत्यक्षत्वप्रसङ्गात्, न च रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकम्, गौरवात, तस्मात् पटस्य प्रत्यक्षत्वानुपपत्त्या चित्ररूपसिद्धिः।

❀ परिमलः ❀

रूपरहितत्वेन = तन्तुरूपेण चित्ररूपवत्ताप्रतीतौ पटे समवायेन रूपाभावेन। **अप्रत्यक्षत्वेति**। द्रव्यचाक्षुषं प्रति समवायेनोद्भूतरूपस्य कारणतया तन्तुषु रूपसत्त्वेऽपि पटे रूपाभावात्पटरूपद्रव्यस्याऽप्रत्यक्षत्वप्रसङ्ग इत्यर्थः। **रूपवदिति**। द्रव्यचाक्षुषत्वावच्छिन्नं प्रति 'स्वाश्रयसमवेतत्वसम्बन्धेनोद्भूतरूपं कारणमतस्तन्तुगतरूपमादायैव पटस्य प्रत्यक्षत्वसम्भव इत्याशयः।

प्रत्यक्षत्वप्रयोजकम् = 'अयं पट' इति प्रत्यक्षविषयत्वप्रयोजकम्, पटादौ प्रत्यक्षविषयतोद्भूतरूपप्रयोज्यैव, रूपाभावे तदभावात्। **गौरवादिति**। समवायसम्बन्धेनोद्भूतरूपस्य कारणत्वमपेक्ष्य स्वाश्रयसमवेतत्वरूपपरम्परासम्बन्धेन कारणत्वे गौरवस्य स्फुटत्वादित्यर्थः। उपसंहरति—**तस्मादिति**। द्रव्यचाक्षुषत्वावच्छिन्नं प्रति समवायेन रूपस्य कारण-

---

ह्यत्व'मपि 'चक्षुर्मात्रग्राह्य' पदार्थकुक्षौ निवेशितम्। फलितोऽर्थः = विशिष्टान्तस्यायमर्थः, तेन गुणत्वमपि योजनीयमिति न न्यूनता। तस्य = प्रभाघटसंयोगात्मकगुणस्य, **विशेषेति**। संयोगस्तु न विशेषगुणः, ते च,—

रूपं, गन्धो रसः, स्पर्शः, स्नेहः सांसिद्धिकस्तथा॥
बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः॥" इति।

१ स्वं नीलादिरूपं, तदाश्रयास्तन्तवः, तत्र समवेतः पट इति पटेऽनेन सम्बन्धेन वर्तमानं रूपं पटप्रत्यक्षं जनयेदेवेत्यर्थः।

❀ न्यायबोधिनी ❀

लक्षणे संख्यादावतिव्याप्त्यभावा'न्मात्र'पदवैयर्थ्यमिति [1]वाच्यम्, जलमात्रवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्तिवारणाय तदुपादानात्। [2]अथ वा चक्षुर्मात्रग्राह्यजातिमद्गुणत्वस्य लक्षणत्वान्न प्रभाघटसंयोगादावतिव्याप्तिः, संयोगत्वजातेश्चक्षुर्मात्रग्राह्यत्वाभावात्। घटपटसंयोगस्य त्वगिन्द्रियग्राह्यत्वात्तद्गतजातेरपि त्वगिन्द्रियग्राह्यत्वात्। [यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठजातेरपि तदिन्द्रियग्राह्यत्वात्।]

अत्र'जाति'घटितलक्षणे गुणत्वानुपादाने चक्षुर्मात्रग्राह्यजातिमति सुवर्णादावतिव्याप्तिरतस्तद्वारणाय तदुपादानम्,

एवं [3]रसादिलक्षणे [4]विशेषणानुपादाने लक्ष्यभिन्नगुणादावतिव्याप्तिः, विशेष्यानुपादाने लक्ष्यमात्रवृत्तिरसत्वगन्धत्वादावतिव्याप्तिः, अतो विशेषणविशेष्ययोरुपादानम् ॥१८॥

---

१. 'मात्र'पदवैयर्थ्यमाशङ्कते—**न चेति**। संख्यायाः सामान्यगुणतया विशेषगुणत्वाभावात्तद्वारणाय 'मात्र' पदं व्यर्थमिति शङ्का, सांसिद्धिकद्रवत्वस्य जलीयविशेषगुणस्यापि द्वीन्द्रियग्राह्यतया तद्वारणाय मात्रपदोपादानमावश्यकमेवेत्युत्तराशयः।

२. परमाणुरूपादावव्याप्तिनिरासाय जातिघटितलक्षणान्तरमाह— **अथवेति**। चक्षुर्मात्रग्राह्यत्वाभावं दर्शयति—**घटपटेति**। 'त्वगिन्द्रिये'त्यस्य त्वगिन्द्रियेणापीत्यर्थः तन्निष्ठजातेः = संयोगनिष्ठसंयोगत्वजातेः। जातिमति = सुवर्णत्वजातिमति, तदुपादानं = 'गुणत्वो'पादानम्।

३. रसादिलक्षणे = रसनभिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति रसनजन्यप्रत्यक्षविषयत्वे सति गुणत्वमिति रसस्य लक्षणे।

४. विशेषणानुपादाने = 'रसनेन्द्रियग्राह्यत्वाऽनुपादाने, लक्ष्यभिन्नगुणादौ = रसभिन्नरूपगन्धादौ, विशेष्यानुपादाने = 'गुणत्वा'नुपादाने, **लक्ष्यमात्रवृत्तीति**। रसलक्षणलक्ष्यभूत-रस-वृत्तिरसत्वे, गन्धलक्षणलक्ष्यभूत-गन्ध-वृत्ति-गन्धत्वे चातिव्याप्तिः,—अतो 'गुण'पदोपादानमित्यर्थः। अन्यद्विशेषणकृत्यं = विशेष्य-विशेषणादिफलं,—

हरित-कपिश-चित्र-भेदात्सप्तविधं; पृथिवी-जल-तेजो-वृत्ति, तत्र पृथिव्यां सप्तविधम्, अभास्वरशुक्लं जले, भास्वरशुक्लं तेजसि ॥१८॥

रसनग्राह्यो गुणो रसः । स च मधुराम्ललवणकटु-कषायतिक्तभेदात् षड्विधः, पृथिवीजलवृत्तिः, पृथिव्यां षड्विधः, जले मधुर एव ॥१९॥

घ्राणग्राह्यो गुणो गन्धः । स च द्विविधः, सुरभिरसुरभिश्च, पृथिवीमात्रवृत्तिः ॥२०॥

त्वगिन्द्रियमात्रग्राह्यो गुणः—स्पर्शः । स त्रिविधः,

❀ न्यायबोधिनी ❀

स्पर्शं लक्षयति—त्वगिन्द्रियमात्रग्राह्य इति । अत्रापि 'मात्र'पदं

❀ दीपिका ❀

रूपस्याश्रयमाह—पृथिवीति । आश्रयं विभज्य दर्शयति—तत्रेति ।

रसं लक्षयति—रसनेति । रसत्वेऽतिव्याप्तिवारणाय 'गुण' पदम् । रसस्याश्रयमाह—पृथिवीति । आश्रयं विभज्य दर्शयति—पृथिव्यामिति ।

गन्धं लक्षयति—घ्राणेति । गन्धत्वेऽतिव्याप्तिवारणाय 'गुण'पदम् ।

स्पर्शं लक्षयति—त्वगिति । स्पर्शत्वेऽतिव्याप्तिवारणाय 'गुण'

---

तथा हि—स्पर्शत्वादावतिव्याप्तिवारणाय—'गुण' इति, रूपादावतिव्याप्तिवारणाय—'त्वगिन्द्रिये'ति ।

शीतोष्णानुष्णाशीतभेदात्, पृथिवीजलतेजोवायुवृत्तिः,[1] तत्र शीतो जले, उष्णस्तेजसि, अनुष्णाशीतः पृथिवीवाय्वोः।

रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च।

❀ न्यायबोधिनी ❀

संख्यादिसामान्यगुणादावतिव्याप्तिवारणाय, अन्यविशेषणकृत्यं पूर्ववद्बोध्यम्, ग्राह्यत्वपदार्थोऽपि पूर्ववदेव–प्रत्यक्षविषयत्वरूप एव बोध्यः ॥२१॥

**रूपादिचतुष्टयमिति।** एतत्तत्त्वनिर्णयश्चेत्थम्—"पाको[2] नाम विजा-

❀ दीपिका ❀

—पदम्, संयोगादावतिव्याप्तिवारणाय 'मात्र'पदम्।

**पाकजमिति।** पाकस्तेजःसंयोगः, तेन पूर्वरूपं नश्यति रूपान्तरमुत्पद्यते इत्यर्थः। अत्र—"परमाणुष्वेव पाको न द्व्यणु-

❀ परिमलः ❀

स्यात्, पटे चित्ररूपाऽस्वीकारे पटस्य प्रत्यक्षं न स्यादिति—पटेऽपि रूपं स्वीकार्यम्, एवञ्च नीलादिरूपाणां व्याप्यवृत्तितया रूपसमुदायस्यैकत्र पटेऽसम्भवाच्चित्ररूपमतिरिक्तमास्थेयमित्याशयः।

**संयोगादाविति।** संयोग-विभागादेरपि त्वगिन्द्रियग्राह्यत्वा-'न्मात्र'पदानुपदानेऽतिव्याप्तिः, तदुक्तौ तु त्वगिन्द्रियेतरचक्षुरिन्द्रियग्राह्यत्व-स्यापि तत्र सत्त्वान्न दोष इत्याशयः।

तेजःसंयोगः = अग्न्यादिसंयोगः, तेन = पाकेन, पूर्वरूपं = श्यामादि-रूपं, रूपान्तरं = रक्तादिरूपान्तरं, तथा च—'पाकज'मिति मूलस्य,—तेजःसंयोगाऽसमवायिकारणकमित्यर्थः। अत्र = पाकप्रक्रियायां–'पीलुपाक-

१. मूले तत्रेति। तत्र = पृथिव्यादिषु त्रिषु, यमुनाजले नीलरूपोपलम्भस्तु भूतलो-पाधिकः, अग्नावुपष्टम्भकपार्थिवरूपप्रतिबन्धाद्भास्वरशुक्लस्यानुपलब्धिरिति तत्त्वम्।

२. पाक इति। विजातीयः = विलक्षणः, रूपजनकस्तेजःसंयोगो विलक्षणः,

❀ न्यायबोधिनी ❀

तीयतेजःसंयोगः, स च नानाजातीयरूपजनको विजातीयस्तेजः-संयोगः, तदपेक्षया रसजनको विजातीयस्तेजःसंयोगः, एवं गन्धजनकोऽपि ततो विजातीय एव, एवं स्पर्शजनकोऽपि तथैव, एवम्प्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः, यथा तृणपुञ्जनिक्षिप्त आम्रादौ ऊष्म-लक्षणविजातीयतेजःसंयोगात्पूर्वहरितरूपनाशेन रूपान्तरस्य पीतादेरुत्पत्तिर्न तु रसादेरुत्पत्तिः, पूर्वरसस्याम्लस्यैवानुभवात्, क्वचित्पूर्वहरितरूपसत्त्वेऽपि रसपरावृत्तिर्दृश्यते, विजातीयतेजःसंयोगरूपपाकवशात्पूर्वतनाम्लरसनाशेन मधुर रसस्यानुभवात्, तस्माद्रूपजनकापेक्षया रसजनको विलक्षण एवाङ्गीकार्यः, एवं गन्धजनको विलक्षण एव, रूपरसयोरपरावृत्तावपि पूर्वगन्धनाशे विजातीयपाकवशात्सुरभिगन्धोपलब्धेः, एवं स्पर्शजनकोऽपि, पाकवशात्कठिनस्पर्शनाशेन मृदुस्पर्शानुभवात्, तस्माद्रूपादिजनका विजातीया एव पाकाः यथाकार्यमुन्नेयाः। अत एव पार्थिवपरमाणूनामेकजातीयत्वेऽपि पाकमहिम्ना विजातीयद्रव्यान्तरानुभवः, यथा [1]गोभुक्ततृणादीनामापरमाण्वन्तभङ्गे तृणा-

---

रसजनको विलक्षणः, गन्धजनकस्ततोऽपि विलक्षणः, स्पर्शजनकोऽपि स, तथा = विलक्षणः, कार्य = रूपरसादि, पाकाः = तेज-संयोगाः। वैलक्षण्यमेव दर्शयति—**यथेति**। तृणपुञ्जनिक्षिप्तैः = बुसादिस्थापितै, ( 'पाल में देना' इति भाषा ), **ऊष्म-लक्षणेति**। ऊष्मस्वरूपेत्यर्थः। रसादेः = आम्रादौ पूर्वरसविलक्षणमिष्टरसादेः, क्वचित् = आम्रविशेषे, ( 'लंगड़ा—आम' ), दृश्यते = अनुभूयते, अनुभवमेव प्रदर्शयति—**विजातीयेति**। तस्मात् = अनुभवबलात्, रसजनकः = ऊष्मादिरूपतेजःसंयोगः, **स्पर्शजनक इति**। 'विलक्षण' इति शेषः। स्पर्शस्य वैलक्षण्येऽनुभवं प्रमाणयति—**मृदुस्पर्शानुभवादिति**। तस्मात् = अनुभवबलात्, अतएव = पाकेन विलक्षणरूपरसादेरनुभवादेव, एकजातीयत्वेऽपि = समानत्वेऽपि, पाकमहिम्ना = ऊष्मादितेजःसंयोगबलात्, **विजातीयद्रव्येति**। आम्र-जम्बीर-द्राक्षेक्षु-तृण-पलाल-दुग्ध—दध्यादिद्रव्येत्यर्थः।

१. अनुभवमेव प्रदर्शयति—**यथेति**। आपरमाण्वन्तभङ्गे = द्व्यणुकान्तावयवि-

❀ न्यायबोधिनी ❀

रम्भकपरमाणुषु विजातीयतेजःसंयोगात्पूर्वरूपादिचतुष्टयनाशे तदनन्तरं दुग्धे यादृशं रूपादिकं वर्तते तादृशरूपरसगन्धस्पर्शजनकास्तेजःसंयोगा जायन्ते, तदुत्तरं तैरेव तादृशरूपरसादय उत्पद्यन्ते, तादृशरूपरसादिविशिष्टपरमाणुभिर्दुग्धद्व्यणुकमारभ्यते, ततस्त्र्यणुकादिक्रमेण महादुग्धारम्भः, एवं दुग्धारम्भकैः परमाणुभिरेव दध्यारभ्यते, एवं पाकमहिम्ना दध्यारम्भकैरेव परमाणुभिर्नवनीतादिकमिति दिक् ॥२२॥

❀ दीपिका ❀

कादौ, आमपाकनिक्षिप्ते[1] घटे, परमाणुषु रूपान्तरोत्पत्तौ, श्यामघटनाशे पुनर्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः, तत्र परमाणवः समवा-

❀ परिमलः ❀

वादिनो वैशेषिका'—इति सम्बन्धः। पाकः = पूर्वरूपपरावृत्तिजनकतेजःसंयोगः, रूपपरिवर्त्तनमिति यावत्, द्व्यणुकादौ = द्व्यणुकादिघटाद्यन्तेष्ववयविषु, रूपादिनाशं प्रति साक्षात्परम्परासाधारणसर्वावयवावच्छेदेन तेजःसंयोगस्य हेतुतयाऽवयविना घटादिना निरुद्धेषु सकलेषु परमाण्वादिरूपेष्ववयवेषु सत्सु अवयविनि पूर्वरूपनाशाऽसम्भवः,—पूर्वरूपनाशहेतोः सर्वावयवावच्छेदेन तेजःसंयोगस्याऽभावात्,—[ कपालादिष्ववयवेषु घटस्य वर्तमानतयाऽवयवानामावरणात्सकलावयवावच्छेदेनाऽग्निसंयोगाऽसम्भवात्— ]—इत्याशयः। **आमेति।** 'घटे आमपाकनिक्षिप्ते सति श्यामघटनाशे परमाणुषु रूपान्तरोत्पत्तौ द्व्यणुकादिक्रमेण पुनर्घटोत्पत्ति'रिति-योजना। तत्र = परमाणुरूपे।

---

विनाशे, **रूपादीति** । रूपरस-गन्ध-स्पर्शेत्यर्थः । जायन्ते = गोजाठराग्निसंयोगाजायन्ते, **तादृशेति** । दुग्धे यादृशा रूपरसादयस्तादृशा इत्यर्थः । महादुग्धं = बिन्दु-तोलक-पल-सेटकादिपरिच्छिन्नं स्थूलं दुग्धम्, एवं = दध्यारम्भकविजातीयतेजःसंयोगैः, **आरभ्यते इति**—'पाकबला'दिति योजनीयम् । नवनीतं = सद्य उद्धृतं घृतं—('नौनी—घी' 'मक्खन' च इति भाषा)। १ आमपाकः = कुलालाग्निः, 'आवाँ' ।

❀ दीपिका ❀

यिकारणम्, तेजःसंयोगोऽसमवायिकारणम्, अदृष्टादिकं निमित्त-कारणम्, द्व्यणुकादिरूपे कारणरूपमसमवायिकारण"मिति पीलुपाकवादिनो—**वैशेषिकाः** ।

"पूर्वघटनाशं विनैव अवयविनि, अवयवेषु परमाणुपर्यन्तेषु च युगपद्रूपान्तरोत्पत्ति"रिति पिठरपाकवादिनो—**नैयायिकाः** ।

❀ परिमलः ❀

**असमवायिकारणमिति** । 'परमाणुरूपे' इति योजनीयम् । **अदृष्टा-दिकमित्यादि**पदेनेश्वरेच्छादिकालादिकं ग्राह्यम् । द्व्यणुकादिरूपे परमाणु-रूपाद्विशेषमाह, **द्व्यणुकादीति** । कारणरूपम् = परमाणुरूपं, न तु पर-माणुरूपे इव तेजः संयोगस्तथेत्याशयः । पीलवः = परमाणवः, वैशेषिकाः = कणादाऽनुयायिनः । अयं हि तेषामाशयः,—"आमपाकनिक्षेपणकर्मतो वेगवता प्रखरेण तेजसा परमाणूनां ( नोदनाख्ये— ) संयोगे सति तेषु परमाणुषु क्रिया जायते, क्रियातः परस्परं विभागः, ततो घटारम्भकद्व्यणु-कादि-संयोगनाशः, ततोऽसमवायिकारण-संयोग-नाशादवयविद्रव्य ( श्याम-घटादि— ) नाशः, ततोऽवशिष्टाः स्वतन्त्राः परमाणवः पच्यन्ते, ततो रूपा-न्तरोत्पत्तौ पुनरप्यदृष्टादिघटितघटादिजनकसामग्रीवशात्परमाणुषु क्रिया, क्रियातो विभागः, ततः पूर्वसंयोगनाशः, तत आरम्भकसंयोगः, ततो द्व्यणुको-त्पत्तिः, ततो रूपोत्पत्तिरिति क्रमेण पूर्ववद्घटरूपमहावयव्युत्पत्तिरिति ।

पूर्वघटनाशं = श्यामघटनाशम्, अवयविनि = घटे, युगपत् = सहैव, रूपान्तरोत्पत्तिः = रक्तरूपोत्पत्तिः । पिठरः = घटः, 'पिठरः स्थाल्युखा कुण्ड' मित्यमरः । "—घटादिकं सच्छिद्रमेव, अन्यथा तदन्तर्गततण्डुलादेः पाको न स्यात्, अतो युगपदेव परमाण्वादौ, घटादौ च पूर्वघटनाशं विनैव

पाकजं नित्यमनित्यं च, नित्यगतं नित्यमनित्यगतमनित्यम् ॥२२॥

एकत्वादिव्यवहारहेतुः—संख्या, नवद्रव्यवृत्तिः,

❀ दीपिका ❀

अत एव पार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः। अन्यत्रेति। जलादावित्यर्थः। नित्यगतमिति। परमाणुगतमित्यर्थः। अनित्यगतमिति। द्व्यणुकादिनिष्ठमित्यर्थः। रूपादिचतुष्टयम्,—उद्भूतं प्रत्यक्षम्, अनुद्भूतमप्रत्यक्षम्, उद्भूतत्वं—प्रत्यक्षत्वप्रयोजको धर्मः, तदभावोऽनुद्भूतत्वम्।

संख्यां लक्षयति—एकेति।

❀ परिमलः ❀

पाकेन रूपान्तरोत्पत्तिः, अत एव 'सोऽयं घट' इति प्रत्यभिज्ञाऽपि स्वरसत उपपद्यते, अनन्तावयवविनाशाऽकल्पनाल्लाघवञ्च—"इति नैयायिकाशयः।

अत एव = मतद्वयेऽपि परमाणौ पूर्वरूपनाशस्य, रूपान्तरोत्पत्तेश्च स्वीकारादेव, जलादाविति। यद्यपि जले गन्धो बाधितस्तथापि यथायोग्यमन्वये तात्पर्यान्न दोषः,—तथा च जले रूपरसस्पर्शाः, तेजसि रूपस्पर्शौ, वायौ स्पर्शमात्रमित्यर्थे तात्पर्यम्। प्रत्यक्षं = बहिरिन्द्रियजन्यप्रत्यक्षविषयम्। अनुद्भूतमिति। यथा परमाणुरूपादिकमित्याशयः। मूले—अनित्यमेवेति। द्वित्वादिसंख्योत्पत्तिहेतुभूताऽपेक्षाबुद्धिनाशेन द्वित्वादीनां नाशादिति भावः।

एकत्वादिपरार्धपर्यन्ता, एकत्वं नित्यमनित्यं च, नित्यगतं नित्यम्, अनित्यगतमनित्यम्, द्वित्वादिकं तु सर्वत्राऽनित्यमेव ॥२३॥

मानव्यवहारासाधारणं कारणं परिमाणम्, नवद्रव्यवृत्ति, तच्चतुर्विधम्—अणु, महत्, दीर्घं, ह्रस्वं चेति ॥२४॥

पृथग्व्यवहारासाधारणं कारणं पृथक्त्वम्,——सर्वद्रव्यवृत्ति ॥२५॥

संयुक्तव्यवहारहेतुः संयोगः, सर्वद्रव्यवृत्तिः ॥२६॥

❁ दीपिका ❁

परिमाणं लक्षयति—**मानेति** । परिमाणं विभजते—**तच्चेति** । भावप्रधानो निर्देशः,— अणुत्वं, महत्त्वं, दीर्घत्वं ह्रस्वत्वं चेत्यर्थः ।

पृथक्त्वं लक्षयति——**पृथगिति** । 'इदमस्मात् पृथक्' इति व्यवहारकारणमित्यर्थः ।

संयोगं लक्षयति—**संयुक्तेति** । 'इमौ संयुक्तौ' इति व्यवहारहेतुरित्यर्थः । संख्यादिलक्षणेषु सर्वत्र दिक्कालादावतिव्याप्तिवारणाय 'असाधारणे'ति देयम् । संयोगो द्विविधः—कर्मजः, संयोगजश्च,

❁ परिमलः ❁

भावप्रधानः = धर्मप्रधानः, अण्वादिपदमणुत्वादिमात्रबोधकमिति यावत् ।

इमौ = दण्ड-घटादिकौ, **संख्यादीति** । संख्यापरिमाण-पृथक्त्व—संयोगलक्षणेषु, **असाधारणेतीति**। दिक्कालादिकन्तु कार्यमात्रं प्रति साधारणं कारणं, नाऽसाधारणमिति न तत्राऽतिव्याप्तिरित्याशयः । कर्मजः = क्रियो-

**संयोगनाशको गुणो विभागः, सर्वद्रव्यवृत्तिः ॥२७॥**

❀ न्यायबोधिनी ❀

विभागं लक्षयति—**संयोगेति**। संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम्। विशेषणमात्रोपादाने क्रियाया अपि संयोगनाशकत्वात्तत्रातिव्याप्तिस्तद्वारणाय 'गुणत्व'मिति विशेष्योपादानम् ॥ २७ ॥

❀ दीपिका ❀

आद्यो हस्तक्रियया पुस्तकसंयोगः, द्वितीयो हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगः, अव्याप्यवृत्तिः संयोगः, स्वात्यन्ताभावसमानाधिकरणत्वम्——अव्याप्यवृत्तित्वम् ।

विभागं लक्षयति—**संयोगेति** । कालादावतिव्याप्तिवारणाय—गुण इति । रूपादावतिव्याप्तिवारणाय 'संयोगनाशक' इति;

❀ परिमलः ❀

त्पन्नः । आद्यः = कर्मजः, **हस्तेति** । हस्तचालनेन हस्तस्य पुस्तकेन यः संयोगः स हस्तक्रियाजनितत्वात्कर्मज इत्याशयः । द्वितीयः = संयोगजः, हस्तपुस्तकसंयोगेन शरीरपुस्तकसंयोगोऽपि जातः, हस्तस्य शरीरावयवत्वादिति शरीरपुस्तकसंयोगो हस्तपुस्तकसंयोगजन्य इति भावः । **स्वेति** । स्वं = कपिसंयोगः, तदत्यन्ताऽभावः = 'मूलावच्छेदेन वृक्षे कपिसंयोगो नास्ती'त्यभावः, तदधिकरणे वृक्षे वर्त्तमानतया कपिसंयोगस्याव्याप्यवृत्तित्वम् । स्वप्रतियोगित्व, स्वसामानाधिकरण्योभयसम्बन्धेन अभावविशिष्टत्वम्—अव्याप्यवृत्तित्वं, स्वं = कपिसंयोगाभाव इति तु तत्त्वम् ।

**कालादाविति** । 'गुण' इत्युक्तौ तु कालादिकं न गुण इति न दोषः, एवं रूपादिकं न संयोगनाशकमिति तदुक्तौ न कोपि दोषः— । ननु संयोग-

---

१. **संयोगनाशकत्वेति** । वै० सामानाधिकरण्यसम्बन्धेन, संयोगनाशकत्वाधिकरणे विभागे—गुणत्वमप्यस्तीति समन्वयः ।

**परापरव्यवहारासाधारणकारणे—परत्वापरत्वे, पृथिव्यादिचतुष्टयमनोवृत्तिनी, ते द्विविधे, दिक्कृते, कालकृते च, दूरस्थे दिक्कृतं परत्वम्, समीपस्थे दिक्कृतमपरत्वम्, ज्येष्ठे कालकृतं परत्वम्, कनिष्ठे कालकृतमपरत्वम् ॥२८॥**

**आद्यपतनासमवायिकारणं गुरुत्वम्। पृथिवीजलवृत्ति।**

❀ न्यायबोधिनी ❀

गुरुत्वं लक्षयति—**आद्येति**। द्वितीयपतनक्रियायां वेगस्यासमवायि-

❀ दीपिका ❀

विभागोऽपि द्विविधः—कर्मजो विभागजश्च, आद्यो हस्तक्रियया हस्तपुस्तकविभागः, द्वितीयो हस्तपुस्तकविभागात्कायपुस्तकविभागः।

परत्वापरत्वयोर्लक्षणमाह—**परापरेति**। परव्यवहारकारणं 'परत्व'म्। अपरव्यवहारकारणम्,—अपरत्वम् इत्यर्थः। ते विभजते—**द्विविधे इति**। दिक्कृतयोरुदाहरणमाह—**दूरस्थ इति**। कालकृते उदाहरति—**ज्येष्ठ इति**।

गुरुत्वं लक्षयति—**आद्येति**। द्वितीयादिपतनस्य वेगासमवायिकारणत्वाद्वेगेऽतिव्याप्तिवारणाय,—'आद्ये'ति।

❀ परिमलः ❀

स्यापि प्रतियोगिविधया नाशं प्रति कारणत्वात्संयोगेऽतिव्याप्तिरिति वाच्यं, संयोगनाशत्वावच्छिन्ननिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वस्य विवक्षणीयतया संयोगे समवायावच्छिन्नायाः संयोगनाशत्वाऽवच्छिन्ननिरूपितकारणताया अभावेनाऽदोषात्। एतत्तात्पर्यग्राहकमेव 'गुण'पदमिति—नीलकण्ठभट्टाः।

**आद्येतीति**। स्वसमानाधिकरण-पतनप्रतियोगिकध्वंसाऽसमानका-

स्यन्दनासमवायिकारणं द्रवत्वम्। पृथिवीजलतेजोवृत्ति। तद् द्विविधम्–सांसिद्धिकं, नैमित्तिकं चेति। सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः, पृथिव्यां घृतादवग्निसंयोगजं द्रवत्वम्। तेजसि सुवर्णादौ ॥३०॥

चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः, जलमात्रवृत्तिः ॥३१॥

❀ न्यायबोधिनी ❀

कारणत्वात्तत्रातिव्याप्तिवारणायाद्येति। उत्तरत्र स्यन्दने आद्यत्वविशेषणमपि पूर्ववदेव योजनीयम् ॥ २९ ॥

स्नेहं लक्षयति—चूर्णादीति। चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं

❀ दीपिका ❀

द्रवत्वं लक्षयति--स्यन्दनेति। स्यन्दनं = प्रस्रवणम्। तेजःसंयोगजं नैमित्तिकम्। तद्भिन्नं सांसिद्धिकम्। पृथिव्यां नैमित्तिकमुदाहरति--घृतादाविति। तेजसि तदाह--सुवर्णादाविति।

स्नेहं लक्षयति--चूर्णेति। कालादावतिव्याप्तिवारणाय 'गुण' इति। रूपादावतिव्याप्तिवारणाय 'पिण्डीभावे'ति।

❀ परिमलः ❀

लिकत्वमाद्यत्वं, स्वं–प्रथमं पतनं, स्वाधिकरणवृत्तियों पतनप्रतियोगिकध्वंसः-तदसमानकालिकत्वस्याद्यपतनक्रियायां सत्त्वाल्लक्षणसमन्वयः। सांसिद्धिकं = स्वाभाविकम्। पिण्डीभावः = संयोगविशेषः।

---

१. आद्यत्वविशेषणम् = 'आद्यत्वरूपं विशेषणम्। अत्रापि आद्यत्वं—स्वसमानाधिकरणस्यन्दनप्रतियोगिकध्वंसासमानकालिकत्वरूपं दीपिकोक्तरीत्या बोध्यं, स्वं = स्यन्दनं, द्वितीयस्यन्दने हि प्रथमस्यन्दनध्वंससमानकालित्वमेवेति न तस्याद्यत्वमिति संक्षेपः। पूर्ववदेव = गुरुत्वलक्षणवदेव।

## श्रोत्रग्राह्यो गुणः शब्दः, आकाशमात्रवृत्तिः,

❀ न्यायबोधिनी ❀

स्नेहस्य लक्षणम्। पिण्डीभावो नाम चूर्णादेर्धारणाकर्षणहेतुभूतो विलक्षणः संयोगः, तादृशसंयोगे [1]स्नेहस्यैवासाधारणकारणत्वं, न तु जलादिगतद्रवत्वस्य, तथा सति द्रुतसुवर्णादिसंयोगेन चूर्णादेः पिण्डीभावापत्तेः, अतः स्नेह एवा-साधारणं कारणम्, विशेषणमात्रोपादाने कालादावतिव्याप्तिरतस्तद्वारणाय विशेष्योपादानम्। वस्तुतस्तु द्रुतजलसंयोगस्यैव चूर्णादिपिण्डीभावहेतुत्वं, स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात्, जले 'द्रुतत्व' विशेषणात्करका-दिव्यावृत्तिः ॥ २१ ॥

शब्दं लक्षयति—**श्रोत्रेति**। [2]शब्दत्वेऽतिव्याप्तिवारणाय 'गुण' इति।

❀ दीपिका ❀

शब्दं लक्षयति—**श्रोत्रेति**। शब्दत्वेऽतिव्याप्तिवारणाय 'गुण' इति। रूपादावतिव्याप्तिवारणाय 'श्रोत्रे'ति। शब्दस्त्रिविधः—संयोगजो, विभागजः, शब्दजश्चेति। तत्र आद्यो भेरीदण्डसंयोग-

❀ परिमलः ❀

**आद्य इति**। भेरीदण्डसंयोगजन्ये शब्दे भेर्याकाशसंयोगोऽसमवायि-कारणं, भेरीदण्डसंयोगो निमित्तकारणं, द्वितीये विभागजे,—वंशखण्ड-

---

१. तादृशसंयोगे = पिण्डीभावहेतुभूते विलक्षणसंयोगे, तथा सति = द्रव्यत्वस्य हेतुत्वे, विशेषणमात्रोपादाने = सत्यन्तमात्रोपादाने, वस्तुतस्त्विति। एवञ्च द्रुते सुवर्णे जलत्वाभावान्न चूर्णादिपिण्डीभाव इति हृदयम्। **करकादीति**। 'वर्षोपलस्तु करका' इत्यमरः, [ करका = 'ओला' इति भाषा। ]

२. शब्दत्वस्यापि शब्दवच्छ्रोत्रग्राह्यत्वाद्गुणपदानुक्तौ तत्राऽतिव्याप्तिः स्फुटैवेति भावः। दलद्वयविभागजः = वंशखण्डद्वयेन गगनस्य यो विभागस्तज्जनितः। वंशखण्ड-द्वयावच्छिन्न इति यावत्। शब्दोत्पत्तिदेशः = भेरीमृदङ्गादिदेशः।

**स द्विविधः—ध्वन्यात्मको, वर्णात्मकश्चेति, ध्वन्यात्मको—भेर्यादौ। वर्णात्मकः,—संस्कृतभाषादिरूपः ॥३२॥**

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम्। सा द्विविधा—स्मृतिरनुभवश्च ॥३३॥**

❀ न्यायबोधिनी ❀

रूपादावतिव्याप्तिवारणाय 'श्रोत्रे'ति। स त्रिविधः—संयोगजो, विभागजः, शब्दजश्चेति, यथा भेरीदण्डसंयोगजो झाङ्कारादिशब्दः, हस्ताभिघातसंयोगजन्यो मृदङ्गादिशब्दः, वंशे पाट्यमाने दलद्वयविभागजश्चटचटाशब्दः, शब्दो-

❀ दीपिका ❀

जन्यः, द्वितीयो वंशे पाट्यमाने दलद्वयविभागजन्यश्चटचटाशब्दः, भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तं द्वितीयादिशब्दाः—शब्दजाः।

बुद्धेर्लक्षणमाह—**सर्वेति**। कालादावतिव्याप्तिवारणाय 'गुण' इति। रूपादावतिव्याप्तिवारणाय 'सर्वव्यवहार' इति। जानामी' त्यनुव्यवसायगम्यज्ञानत्वं लक्षणमित्यर्थः। बुद्धिं विभजते—**सेति**।

❀ परिमलः ❀

द्वयावच्छिन्नाकाशविभागोऽसमवायिकारणं, दलद्वयविभागो निमित्तकारणं, तृतीये पूर्वपूर्वशब्दोऽसमवायिकारणं, पवनादि निमित्तकारणम्, आकाशः सर्वत्र समवायिकारणमिति तत्त्वम्।

**सर्वेति**। सर्वे ये व्यवहारा आहार-विहारादयस्तेषां हेतुरित्यर्थः। **जानामीतीति**। 'अयं घटः' इति प्रत्यक्षानन्तरं 'घटमहं जानामी'त्यनुव्यवसायेन—'घटविषयकज्ञानवानह'मिति प्रत्ययाद्घटज्ञानस्यानुव्यवसायगम्यज्ञानत्वमिति भावः। **बुद्धिरिति**। बुद्धिरेव नैयायिकमते ज्ञानं, न तु सांख्यमत इव पदार्थान्तरं महत्तत्वात्मकमित्याशयः। वेगत्व-भावनात्व-

**संस्कारमात्रजन्यं ज्ञानं स्मृतिः, तद्भिन्नं ज्ञानमनुभवः ।**

❁ न्यायबोधिनी ❁

त्पत्तिदेशमारभ्य श्रोत्रदेशपर्यन्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा निमित्तपवनेन शब्दधारा जायन्ते, तत्र उत्तरोत्तरशब्दे पूर्वपूर्वशब्दः कारणम् ।

❁ परिमलः ❁

स्मृतेर्लक्षणमाह–**संस्कारेति** । भावनाख्यः–संस्कारः, संस्कारध्वंसेऽतिव्याप्तिवारणाय 'ज्ञान'मिति, घटादिप्रत्यक्षेऽतिव्याप्तिवारणाय 'संस्कारजन्य'मिति,–प्रत्यभिज्ञायामतिव्याप्तिवारणाय 'मात्रे'ति ।

अनुभवं लक्षयति—**तद्भिन्नमिति** । स्मृतिभिन्नं ज्ञानमनुभव

❁ परिमलः ❁

स्थितिस्थापकत्वभेदेन संस्कारस्य त्रैविध्यादाह—**भावनाख्य इति** । संस्कारध्वंसस्यापि संस्कारमात्रजन्यत्वादाह—**संस्कारध्वंस इति** । **प्रत्यभिज्ञायामिति** । 'सोऽयं देवदत्तो यो मथुरायां दृष्ट' इति प्रत्यभिज्ञायां तत्तद्देशकालवृत्तित्वेन रूपेण योऽनुभवस्तजन्यभावनाख्यसंस्कारमात्रजन्यत्वं नास्ति, इन्द्रियजन्यत्वस्यापि तत्र सत्त्वात् । यद्यपि संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वरूपं संस्कारमात्रजन्यत्वं स्मृतावप्यसम्भवि, तत्राऽपि संस्कारेतरात्मादिजन्यत्वस्य सत्त्वात्, तथापि 'संस्कारेतरचक्षुराद्यजन्यत्वे सति संस्कारजन्यत्व'मित्यत्रैव तत्तात्पर्यमिति न दोषः ।

तद्भिन्नं = स्मृतित्वावच्छिन्नभिन्नं, तेन यत्किञ्चित्स्मृतिव्यक्तिभिन्नत्वस्य

---

१. **वीचीतरङ्गन्यायेनेति** । सरोवरादौ पाषाणादिप्रक्षेपादुत्थितास्तरङ्गाः परतीरमप्राप्य न विलीयन्ते, किन्तु तावत्पर्यन्तं पूर्वैस्तरङ्गैरपरे तद्व्यापकास्तरङ्गास्ततोऽप्यपरे इति क्रमेणोत्तरोत्तरं व्यापकतरङ्गधारोत्पद्यते, तथा कर्णदेशप्राप्तिं यावच्छब्दधारा जायत इत्याशयः । २. **कदम्बमुकुलेति** । आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते, ततोऽप्यन्ये इतिरीत्या शब्दाच्छब्दान्तरमुत्पद्यत इति तत्त्वम् ।

स द्विविधः—यथार्थोऽयथार्थश्चेति, तद्वति तत्प्रकारकोऽनुभवो

❀ न्यायबोधिनी ❀

बुद्धेर्लक्षणमाह—**सर्वव्यवहारेति**। 'व्यवहारः'=शब्दप्रयोगः, ज्ञानं विना 'शब्दप्रयोगासम्भवाच्छब्दप्रयोगरूपव्यवहारहेतुत्वं ज्ञानस्य लक्षणम्। बुद्धिं विभजते—**सा द्विविधेति** ॥ ३२ ॥

स्मृतिं लक्षयति—**संस्कारेति**। बहिरिन्द्रियाजन्यत्वविशिष्टसंस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतेर्लक्षणम्, विशेषणानुपादाने प्रत्यक्षानुभवेऽतिव्याप्तिस्तद्वारणाय विशेषणोपादानम्, संस्कारध्वंसेऽतिव्याप्तिवारणाय विशेष्योपादानम्, ध्वंसं प्रति प्रतियोगिनः कारणत्वात्संस्कारध्वंसेऽपि संस्कारजन्यत्वस्य सत्त्वात्प्रत्यभिज्ञायामतिव्याप्तिवारणाय 'मात्र' पदम्।

अनुभवं लक्षयति—**तद्भिन्नमिति**। 'तद्भिन्नत्वं' नाम स्मृतिभिन्नत्वम्, तथा च स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवस्य लक्षणम्, तत्र विशेषणानुपादाने स्मृतावतिव्याप्तिः, विशेष्यानुपादाने घटादावतिव्याप्तिरतस्तद्वारणाय विशेषणविशेष्ययोरुपादानम्।

अनुभवं विजते—**स द्विविध इति**।

यथार्थानुभवं लक्षयति—**तद्वतीति**। 'तद्वती'त्यत्र सप्तम्यर्थो विशे-

❀ दीपिका ❀

इत्यर्थः। अनुभवं विभजते—स द्विविध इति। यथार्थानुभवं लक्षयति—तद्वतीति। ननु 'घटे घटत्वम्' इति प्रमायामव्याप्तिः,

❀ परिमलः ❀

स्मृतौ सत्त्वेऽपि नातिव्याप्तिः। मूले—**तद्वतीति**। सप्तम्यर्थो विशेष्यित्वं,—विशेष्यतानिरूपकत्वमिति यावत्। सः = प्रकारीभूतो धर्मः, प्रकारो यस्यासौ तथा। तत्पदार्थश्चात्र प्रकारीभूतो—धर्मः, घटत्वादिः, प्रकृत्यर्थो निष्ठत्व-

---

१. शब्दप्रयोगः = घट-पटादिशब्दोच्चारणं, 'आत्मा बुद्ध्या समेत्यर्थां'नित्याद्युक्तेः।

❀ न्यायबोधिनी ❀

ष्यित्वम्', तच्छब्देन प्रकारीभूतो धर्मो धर्त्तव्यः तथा च तद्वद्विशेष्यकत्वे

❀ परिमलः ❀

सम्बन्धेन विशेष्यतायामन्वेति, तथा च—तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति, तन्निष्ठप्रकारतानिरूपकत्वे च सति अनुभवत्वं—यथार्थानुभवलक्षणं निष्पन्नम्। यथा रजते—'इदं रजत'मिति ज्ञानम्, तथा हि—तत्पदेन प्रकारीभूतो धर्मो रजत्वं, तद्वत्–रजतं, तन्निष्ठविशेष्यतानिरूपकत्वमप्यस्ति तादृशे ज्ञाने, एवं रजतत्वनिष्ठप्रकारतानिरूपकत्वमपि तादृशे 'इदं रजत' मिति ज्ञानेऽस्तीति लक्षणसमन्वयः। अत्रा'नुभवत्व'मात्रोपादाने यथार्थानुभवेतिव्याप्तिः 'तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्व'मात्रोक्तौ—'इदं रजत'मिति यथार्थानुभवजन्यस्मृतावतिव्याप्तिः, तद्वति तत्प्रकारकत्वस्य तत्राप्यक्षतत्वात्, अतो'ऽनुभवत्व'-निवेशः। 'तद्वन्निष्ठविशेष्यतानिरूपकत्वे सत्यनुभवत्व'मित्येतावदुक्तौ तु—शुक्तित्ववच्छुक्तिनिष्ठविशेष्यतानिरूपके शुक्ता'विदं रजत' मित्ययथार्थानुभवेऽतिव्याप्तिः, 'तत्प्रकारकत्वो'पादाने तु शुक्तित्ववद्विशेष्यकशुक्तित्वप्रकारकज्ञानत्वाभावान्न दोषः। 'एकत्र तत्पदेन शुक्तेरन्यत्र तत्पदेन रजत्वस्योपादान'-मित्यर्धजरतीयस्यासम्भवादुभयत्राप्येकस्यैव धर्मस्य तत्पदेन ग्रहणात्। 'तत्प्रकारकत्वे सत्यनुभवत्व'मित्येतावदुक्तावप्ययथार्थानुभव एवातिव्याप्तिः, तत्पदेन रजतत्वमादाय रजत्वप्रकारतानिरूपकत्व'स्येदं रजत'मिति भ्रमेऽपि सत्त्वात्, अत'स्तद्वद्विशेष्यकत्वे'ति।

ननु 'रजते रजतत्वं' 'घटे घटत्व'मिति यथार्थाऽनुभवेऽव्याप्तिः, तथा

---

१. विशेष्यित्वं = विशेष्यतानिरूपकत्वं,—ज्ञाननिष्ठो धर्मविशेषः, धर्मः = घटत्व–पटत्वादिरूपः, तद्वदिति। प्रकारीभूतरजतत्वादिधर्मवन्निष्ठविशेष्यतानिरूपकत्वे सतीत्यर्थः। रजते = वास्तवे रजते, अत्र = अस्मिन्ननुभवे, रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपकत्वं, रजतत्वनिष्ठप्रकारतानिरूपकत्वञ्चे'दं रजत' मिति ज्ञानेऽस्त्येवेति समन्वय इति भावः।

यथार्थः, यथा 'अयं घटः' इति ज्ञानं, सैव प्रमेत्युच्यते ॥३४॥

❀ न्यायबोधिनी ❀

सति तत्प्रकारकानुभवत्वं यथार्थानुभवस्य लक्षणम्, उदाहरणम्—रजते 'इदं रजतम्' इति ज्ञानम्, अत्र रजतत्ववद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वस्य सत्त्वाल्लक्षणसमन्वयः, तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वमिति तु निष्कर्षः। [1]अन्यथा यथाश्रुते 'रङ्गरजतयोरिमे रजतरङ्गे'

❀ दीपिका ❀

घटत्वे घटाभावादिति चेन्न, यत्र यत्सम्बन्धोऽस्ति तत्र तत्सम्बन्धानुभव इत्यर्थात् घटत्वेऽपि घटसम्बन्धोऽस्तीति नाव्याप्तिः। सैवेति। यथार्थानुभव एव शास्त्रे 'प्रमा' इत्युच्यत इत्यर्थः।

❀ परिमलः ❀

हि—अस्मिन् ज्ञाने रजतं प्रकारः, रजतत्वञ्च विशेष्यं, तथा च रजतप्रकारकत्वेऽपि विशेष्यीभूते रजतत्वे रजतस्य (प्रकारीभूतस्य) वृत्तिनियामकसम्बन्धेनावर्त्तमानतया रजतवद्विशेष्यकत्वविरहादुक्तलक्षणाऽव्याप्तेः स्पष्टत्वादित्याशङ्कते—**नन्विति**। घटत्वे = विशेष्यीभूते घटत्वे, घटाभावात् = 'घटे घटत्व'मिति ज्ञानप्रकारीभूतस्य घटस्याभावात्, आधेयतासम्बन्धेन घटस्य घटत्वे सत्त्वेऽपि आधेयताया वृत्त्यनियामकतया तेन सम्बन्धेन घटरूपाधिकरणाऽप्रसिद्धेरित्याशयः। 'तद्वती'त्यत्र मतुपोऽधिकरणार्थकतां विहाय सम्बन्ध्यर्थकतामाश्रित्य समाधत्ते—**यत्रेति**। यत्र = विशेष्ये, यत्सम्बन्धः = प्रकारीभूतस्य संसर्गः, तत्र = विशेष्ये, तत्सम्बन्धानुभवः = तत्सम्बन्धानुभवः प्रमा, घटत्वेऽपि घटस्याधेयताख्यः सम्बन्धोऽस्तीति तेन सम्बन्धेन सम्बन्धिनि घटत्वे घटस्य सम्बन्धोऽस्त्येव, तथा च आधेयतया घटसम्बन्धि—घटत्व-विशेष्यकत्वावच्छिन्न-घट-प्रकारकत्वस्य 'घटे घटत्व' मित्यत्र सत्त्वान्नाव्याप्तिरित्याशयः।

---

१. अन्यथेति। 'तद्वन्निष्ठविशेष्यतानिरूपितप्रकारतानिरूपितप्रकारिताशालित्व'

## तदभाववति तत्प्रकारकश्चायथार्थः ॥ ३५ ॥

❀ न्यायबोधिनी ❀

इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिः, तत्रापि रजतत्ववद्विशेष्यकत्व-रजतत्वप्रकारकत्वयोः, रङ्गत्ववद्विशेष्यकत्व—रङ्गत्वप्रकारकत्वयोः सत्त्वात्, उक्तनिष्कर्षे तु नातिव्याप्तिः, तज्ज्ञानस्य रङ्गांशे रजतत्वावगाहित्वेन, रजतांशे रङ्गत्वावगाहित्वेन च,—रजतत्वप्रकारतायाः रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि, रङ्गत्वनिष्ठप्रकारताया रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वेऽपि, रजतत्वप्रकारताया रजतत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावात्, (एवं) रङ्गत्वप्रकारताया रङ्गत्ववन्निष्ठविशेष्यतानिरूपितत्वाभावाच्च ॥ ३४ ॥

अयथार्थानुभवं लक्षयति—**तदभाववतीति**। अत्रापि पूर्ववत्तदभाव-

❀ दीपिका ❀

**अयथार्थानुभवं निरूपयति—तदभाववतीति।**

❀ परिमलः ❀

**तदभाववतीति**। तदभाववद्विशेष्यकत्वे सति, तत्प्रकारकत्वे सत्यनुभवत्वमयथार्थानुभवत्वमित्यर्थः। शुक्तौ,—'इदं रजत'मिति भ्रमज्ञाने—प्रकारीभूत-रजतत्वाऽभाववती या शुक्तिः, तन्निष्ठविशेष्यतानिरूपकत्वस्य, रजतत्वनिष्ठप्रकारतानिरूपकत्वस्य च सत्त्वाल्लक्षणसमन्वयः। 'अनुभवत्व'-मात्रोक्तौ प्रमायामतिव्याप्तिः। 'अनुभवत्वा'नुक्तौ अयथार्थस्मृतावतिव्याप्तिः। 'तत्प्रकारकत्वाऽनुपादाने,—तत्पदेनोदासीनं धर्मं शुक्तित्वादिकमादाय शुक्ति-

---

मित्यर्थस्वीकारे-रङ्गरजतयोः—"इमे रजतरङ्गे" इति समूहालम्बनभ्रमे रजतत्ववन्निष्ठ—विशेष्यतानिरूपकत्वस्य, रजतत्वनिष्ठप्रकारतानिरूपकत्वस्य च सत्त्वात्प्रमात्वापत्तिः, रजते हि,—रङ्गत्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः, रजतत्वे च रङ्गनिष्ठविशेष्यतानिरूपितप्रकारतायाश्चाऽक्षतत्वाद्यथाश्रुतप्रमालक्षणस्य सत्त्वात्।

तन्निष्ठप्रकारताया निवेशे तु—रजतत्वनिष्ठप्रकारताया रङ्गत्ववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वेऽपि रजतत्ववद्रजतनिष्ठविशेष्यतानिरूपितत्वाभावान्न दोष इति सकलग्रन्थाशयः।

❀ न्यायबोधिनी ❀

वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं विवक्षणीयम्। अन्यथा यथाश्रुते 'रङ्गरजतयोरिमे रङ्गरजते' इत्याकारकसमूहालम्बनप्रमायामतिव्याप्तिः, एतत्समूहालम्बनस्य रङ्गरजतोभयविशेष्यकत्वेन रजतत्वरङ्गत्वोभयप्रकारकत्वेन च रजतत्वाभाववद्रङ्गविशेष्यकत्वरजतत्वप्रकारकत्वयो रङ्गत्वाभाववद्रजतविशेष्यकत्वरङ्गत्वप्रकारकत्वयोश्च सत्त्वात्। उक्तनिष्कर्षे तु न तत्रातिव्याप्तिः,

❀ दीपिका ❀

ननु 'इदं संयोगि' इति प्रमायामतिव्याप्तिरिति चेन्न, यदवच्छेदेन यत्सम्बन्धाभावः, तदवच्छेदेन तत्सम्बन्धज्ञानस्य विवक्षितत्वात्,

❀ परिमलः ❀

त्वाभाववद्विशेष्यकत्वस्य रजते-'इदं रजत'मिति प्रमाज्ञाने सत्त्वादतिव्याप्तिरतस्तत्प्रकारकत्वानुधावनं, तथा च शुक्तित्वप्रकारकत्वस्य तत्राभावान्न दोषः। 'तदभाववद्विशेष्यकत्व'दलानुक्त्वा 'इदं रजत'मिति प्रमायामतिव्याप्तिः, रजतत्वप्रकारकत्वस्यानुभवत्वस्य च तत्राऽपि सत्त्वात्, तन्निवेशे तु रजतत्वाभाववद्विशेष्यकत्वस्य रजतांशे 'इदं रजत'मिति ज्ञानेऽभावान्नातिव्याप्तिरिति भावः।

ननु 'वृक्षः कपिसंयोगी', 'इद संयोगि'—इत्यादिप्रमाज्ञानेऽतिव्याप्तिः, मूलावच्छेदेन कपिसंयोगाभाववति वृक्षे संयोगप्रकारकत्वेन 'तदभाववति तत्प्रकारकानुभवत्वरूपायथार्थज्ञानलक्षणस्य तत्र सत्त्वादित्याशङ्कते—नन्विति। यदवच्छेदेन = मूलाद्यवच्छेदेन, यत्सम्बन्धाभावः = यत्सम्बन्धावच्छिन्नप्रतियोगिताकयदभावः ( समवायसम्बन्धावच्छिन्नप्रतियोगिताककपिसयोगाभावः, ) तदवच्छेदेन = मूलावच्छेदेन, तत्सम्बन्धज्ञानस्य = तत्सम्बन्धेन तत्प्रकारकानुभवस्य, तथा च—इदं संयोगि',—इत्यादौ मूलावच्छेदेन समवायेन कपिसंयोगाभाववति समवायेन कपिसंयोगाभावात्, (यदच्छेदेन कपिसंयोगाभावस्तदवच्छेदेन वृक्षे कपिसंयोगाऽभावात्–) नाति-

**यथार्थानुभवश्चतुर्विधः—प्रत्यक्षानुमित्युपमितिशाब्दभेदात् ।**

❀ न्यायबोधिनी ❀

तादृशप्रमायाः रजतांशे रजतत्वावगाहित्वेन, रङ्गांशे रङ्गत्वावगाहित्वेन च रजतत्वप्रकारताया रजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानिरूपितत्वाभावात् । एवं रङ्गत्वप्रकारताया रङ्गत्वाभाववद्रजतनिष्ठविशेष्यतानिरूपितत्वाभावान्नातिव्याप्तिः । उदाहरणं यथा शुक्तौ 'इदं रजतम्' इति ॥ ३५ ॥

यथार्थानुभवं विभजते—**चतुर्विध इति ।**

❀ दीपिका ❀

संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात्, संयोगावच्छेदेन संयोगसम्बन्धस्य सत्त्वान्नातिव्याप्तिः ।

यथार्थानुभवं विभजते—यथार्थेति । प्रसङ्गात् प्रमाकरणं

❀ परिमलः ❀

व्याप्तिः । वृक्षे हि—शाखावच्छेदेन कपिसंयोगो, मूलावच्छेदेन च कपिसंयोगाभाव इति हृदयम् । संयोगाभावाच्छेदेन = कपिसंयोगाभावावच्छेदकमूलावच्छेदेन, संयोगज्ञानस्य = 'कपिसंयोगि वृक्षमूल'मिति ज्ञानस्य । **भ्रमत्वादिति** । एवञ्च 'तदभाववति तत्प्रकारकानुभवत्व'रूपस्यायथार्थानुभवलक्षणस्य तत्राऽभावान्नातिव्याप्तिः । संयोगावच्छेदेन = कपिसंयोगावच्छेदेन = शाखाऽवच्छेदेन, संयोगसम्बन्धस्य = समवायेन कपिसंयोगस्य, **सत्त्वादिति** । शाखावच्छेदेन कपिसंयोगाभावाभावात् कपिसंयोगाऽभावावच्छेदकावच्छेदेन कपिसंयोगप्रकारत्वस्याभावान्नातिव्याप्तिरिति सरलोऽर्थः ।

**प्रसङ्गादिति** । स्मृतिविषयस्योपेक्षानर्हत्वेन निरूपणविषयत्वं-'प्रसङ्ग' सङ्गतिः, सा च प्रकृते प्रमाकरणे प्रमाकरणतया स्मृतिविषयस्य प्रमाकरणस्यनिरूपणेऽस्त्येव । ननु सामान्यधर्मप्रकारेण ज्ञानविषयीभूतस्यैव विशेषधर्मप्रकारेण प्रतिपादनं सम्भवति, सामान्यधर्मप्रकारज्ञानं विना विशेषधर्मप्रकारकजिज्ञासाया एवानुदयादिति प्रमाणसामान्यनिरूपणं विना विशेष-

**तत्करणमपि चतुर्विधम्-प्रत्यक्षानुमानोपमानशब्दभेदात्॥३६॥**
**असाधारणं कारणं करणम् ॥ ३७ ॥**

❀ न्यायबोधिनी ❀

**तत्करणमिति**—'फलीभूतप्रत्यक्षादिकरणं चतुर्विधमित्यर्थः। प्रत्यक्षादिचतुर्विधप्रमाणानां प्रमाकरणत्वं सामान्यलक्षणम्। एकैकप्रमाणलक्षणं तु वक्ष्यते—'प्रत्यक्षज्ञाने'त्यादिना ॥ ३६ ॥

करणलक्षणमाह—**असाधारणमिति**। व्यापारवदसाधारणं कारणं करणमित्यर्थः। असाधारणत्वञ्च 'कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्', यथा दण्डादेर्घटादिकं प्रत्यसाधारणकारणत्वम्, कार्यत्वातिरिक्तो घटत्वादिरूपो धर्मः, तदवच्छिन्नकार्यता घटे, तन्निरूपितकार-

❀ दीपिका ❀

विभजते–**तत्करणमिति**। प्रमाकरणमित्यर्थः। '**प्रमायाः करणं** प्रमाण'मिति प्रमाणसामान्यलक्षणम्।

करणलक्षणमाह—**असाधारणेति**। साधारणकारणे दिक्कालादावतिव्याप्तिवारणाय—**असाधारणेति**।

❀ परिमलः ❀

रूपेण विभागानुपपत्त्या प्रमाणसामान्यलक्षणमाह—**प्रमाया इति**। तथा च 'प्रमाण'पदेनैव तल्लाभान्न तदकथनान्न्यूनतेत्याशयः।

**साधारणकारण इति**। कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वं साधारणकारणत्वं, दिक्कालादृष्टादीनाञ्च कार्यत्वावच्छिन्नकार्यमात्रं प्रत्येव कारणत्वात्साधारणकारणत्वं, तत्राऽतिव्याप्तिवारणाय—'असाधारणे'ति विशेषणं, तथाच दिक्कालादीनां नासाधारणकारणत्वं, कार्यत्वातिरिक्तधर्मा-

१. फलीभूतेति। प्रत्यक्षं द्विविधं–फलीभूतं ज्ञानात्मकं, कारणीभूतं–चक्षुरत्वगन्द्रियादिरूपञ्चेति।

## कार्यनियतपूर्ववृत्ति कारणम् ॥ ३८ ॥

❀ न्यायबोधिनी ❀

णता दण्डे, अतो घटं प्रति दण्डोऽसाधारणं कारणम्, भ्रम्यादिरूपव्यापारवत्त्वाच्च करणम्। साधारणकारणत्वञ्च,–कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्', यथेश्वरादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात्साधारणकारणत्वम् ॥ ३७ ॥

कारणं लक्षयति—**कार्यनियतेति**। कार्यं प्रति नियतत्वे 'सति पूर्व-

❀ दीपिका ❀

कारणलक्षणमाह—कार्येति। 'पूर्ववृत्ति कारणम्' इत्युक्ते रासभादावतिव्याप्तिः स्यादतो 'नियते'ति। तावन्मात्रे कृते कार्येऽति-

❀ परिमलः ❀

वच्छिन्नकार्यतानिरूपितकारणताशालित्वस्यैवाऽसाधारणकारणतया, कार्यत्वाऽतिरिक्तानुभवत्वव्याप्यप्रत्यक्षत्वादिधर्मावच्छिन्नप्रत्यक्षादिप्रमानिष्ठकार्यतानिरूपितकारणत्वस्य दिक्कालादावभावेनाऽतिव्याप्तिविरहादिति भावः। **नियतेति**। कार्यनियतत्वञ्च–कार्यव्यापकत्वं, कार्याऽधिकरणवृत्त्यत्यन्ताऽभावाप्रतियोगित्वमिति यावत्, यथा–घटकारणे दण्डे,—कार्यं–घटः, तदधिकरणं कपालद्वयं, तत्र 'दण्डो नास्ती'त्यभावो नास्ति, 'स्वजन्यभ्रमिजन्यभ्रमिमत्त्वसम्बन्धेन दण्डस्य कपाले सत्त्वात्, किन्तूदासीनःपटाद्यभावस्तत्प्रतियोगित्वं पटादौ, तदप्रतियोगित्वं,–घटरूपकार्याव्यवहितप्राक्क्षणवृत्तित्वञ्चास्तीति—लक्षणसमन्वयः। 'नियत'पदानुपादाने तु–रासभादेरपि घटरूपकार्यप्राक्क्षणाऽवच्छेदेन वर्त्तमानत्वात्तत्राऽतिव्याप्तिः, व्यापकत्वार्थक'नियत' पदोपादाने तु घटरूपकार्याधिकरणे कपाले 'रासभो नास्ती'त्यभावस्य सत्त्वात्तत्प्रतियोगित्वस्यैव रासभे सत्त्वेन व्यापकत्वाभावान्नातिव्याप्तिः। 'कार्य-

१. नियतत्वं व्यापकत्वं, कार्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वमिति यावत्, कार्यं = घटः, तद्वत्–कपालं। २. स्वं = दण्डः, तज्जन्यभ्रमणं-चक्रे, तज्जन्यभ्रमिः-कपाले।

❁ न्यायबोधिनी ❁

वृत्तित्वं कारणत्वम्। 'नियतत्व'विशेषणानुपादाने पूर्ववर्तिनो रासभादेरपि घटादिकारणत्वं स्यादतो 'नियतत्वे सती'ति विशेषणम्। नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतोऽनन्यथासिद्धपदमपि कारणलक्षणे निवेशनीयम्। एवं च न तत्रातिव्याप्तिः, दण्डरूपादीनामन्यथासिद्धत्वात् ॥३८॥

❁ दीपिका ❁

व्याप्तिरतः 'पूर्ववृत्ती'ति। ननु तन्तुरूपमपि पटं प्रति कारणं स्यादिति चेन्न, 'अनन्यथासिद्धत्वे सती'ति विशेषणात्। अनन्यथासिद्धत्वम्,–अन्यथासिद्धिविरहः।

अन्यथासिद्धिः त्रिविधा–( १ ) येन सहैव यस्य यं प्रति पूर्व-

❁ परिमलः ❁

व्यापकत्वमात्रो'क्तौ–कार्याधिकरणे कपाले समवायेन घटस्य वर्त्तमानतयोदासीनपटाद्यभावस्यैव तत्र धर्त्तुं शक्यतया तदप्रतियोगित्वस्य घटेऽक्षततया पटे घटकारणत्वापत्तिरतः 'कार्यपूर्ववर्त्तित्व' निवेशः। तन्निवेशे च घटरूपकार्यपूर्ववर्त्तित्वस्य पटरूपकार्येऽसम्भवेन न दोषः।

**कारणं स्यादिति**। तन्तुरूपस्यापि पटरूपकार्यनियतपूर्ववृत्तित्वादित्याशयः। विरहः=अभावः। **त्रिविधेति**। यद्यपि विश्वनाथादिभिः,–तन्तुत्व-तन्तुरूप–गगन–कुलालपितृ–रासभेषु पञ्चसु पृथक् पृथगन्यथासिद्धिः प्रदर्शितेति पञ्चविधाऽन्यथासिद्धिस्तथाऽपि–वक्ष्यमाणरीत्या तन्तुत्व–तन्तुरूपयोः प्रथमयैव, आकाशकुलालतातयोर्द्वितीययैव, रासभे च तृतीययैव सिद्धेस्त्रैविध्यमेवात्रादृतमिति भावः। येन = तन्तुना, यस्य = तन्तुरूपस्य, तन्तुत्वस्य च, यं प्रति = पटं प्रति, पूर्ववर्त्तिता गृह्यते, तं पटं प्रति, तत् = तन्तुरूपं, तन्तुत्वञ्च, तेन = तन्तुना, अन्यथासिद्धमित्यर्थः। तन्तुरूपत्वेनैव तन्तुरूपस्य पटपूर्ववृत्तित्वज्ञानेन एकज्ञानविषयत्वरूपसाहित्यस्य तन्तुत्व–तन्तुरूपज्ञाने सत्त्वात्तयोरन्यथासिद्धत्वमित्याशयः।

❀ दीपिका ❀

वृत्तित्वमवगम्यते तत्तेनान्यथासिद्धम्, यथा तन्तुना तन्तुरूपं, तन्तुत्वं च पटं प्रति, ( २ ) अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम्,—यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञाते एव पटं प्रति आकाशस्य। ( ३ ) अन्यत्र क्लृप्तनियतपूर्ववृत्तिन एव कार्यसम्भवे तत्सहभूतमन्यथासिद्धम्,—यथा पाकजस्थले गन्धं प्रति रूपप्रागभावस्य। एवं च अनन्यथा-सिद्धनियतपूर्ववृत्तित्वं कारणत्वम्।

❀ परिमलः ❀

द्वितीयामन्यथासिद्धिमाह—**अन्यमिति**। अन्यं प्रति = शब्दं प्रति, पूर्ववृत्तित्वे = कारणत्वे, ज्ञाते एव, यस्य = आकाशस्य, यं प्रति = पटं प्रति, पूर्ववृत्तित्वं—कारणत्वम्, अवगम्यते = ज्ञायते, तं प्रति = पटं प्रति, तत् = गगनं, **शब्दं प्रतीति**। आकाशत्वेनैवाकाशस्य परं प्रति कारणत्वं स्यात्, आकाशत्वं च शब्दसमवायिकारणत्वं, तथा च शब्दं प्रति कारणत्व-मगृहीत्वाऽऽकाशस्याकाशत्वेन पटपूर्ववृत्तित्वं गृहीतुमशक्यम्, अत आकाशो ऽन्यथासिद्ध इत्याशयः। **आकाशस्येति**। "पूर्ववृत्तित्वं ग्राह्यमित्याकाशः परं प्रत्यन्यथासिद्धः" इति शेषः।

तृतीयामन्यथासिद्धिमाह—**अन्यत्रेति**। रूपप्रागभावशून्यस्थले—(जलादावपाकजगन्धस्थले) क्लृप्तनियतपूर्ववर्त्तिनो गन्धप्रागभावादेव पाकज-स्थले ( रूपप्रागभावस्थलेऽपि ) गन्धरूपकार्यसम्भवे—गन्धप्रागभावभिन्नो रूपप्रागभावोऽन्यथासिद्धः=गन्धरूपकार्यं प्रति रूपप्रागभावो न कारणं, किन्तु गन्धप्रागभाव एव कारणमित्यर्थः। तत्सहभूतं = तत्सहकारि, प्रकृते—गन्धप्रागभावसहचरितो रूपप्रागभावः, **प्रागभावस्येति**। "अन्यथा-सिद्धत्व"मिति शेषः। वस्तुतस्तु तृतीययैव सिद्धेऽन्यथासिद्धिद्वयं व्यर्थ-मेव। **अनन्यथासिद्धेति**। अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्त्तित्वं कारणत्वमित्यर्थः।

**कार्यं,–प्रागभावप्रतियोगि ॥ ३९ ॥**

**कारणं त्रिविधं—समवाय्यसमवायिनिमित्तभेदात् ।**

**यत्समवेतं कार्यमुत्पद्यते तत्—समवायिकारणम्,**

❀ न्यायबोधिनी ❀

कार्यं लक्षयति—**कार्यमिति** । प्रागभावप्रतियोगित्वं कार्यस्य लक्षणम् । कार्योत्पत्तेः पूर्वम् 'इह घटो भविष्यति' इति या प्रतीतिर्जायते तत्प्रतीतिविषयीभूतो योऽभावः स प्रागभावः, तत्प्रतियोगि घटादिरूपं कार्यम् ॥ ३९ ॥

कारणं विभजते–**कारणमिति** । समवायिकारणम्, असमवायिकारणं, निमित्तकारणं चेति ।

समवायिकारणं लक्षयति—**यत्समवेतमिति** । यस्मिन्समवेतं सत् =

❀ दीपिका ❀

कार्यलक्षणमाह—**कार्यमिति** ।

कारणं विभजते–**कारणमिति** । समवायिकारणलक्षणमाह–**यत्समवेतमिति** । यस्मिन् समवेतमित्यर्थः । असमवायिकारण-

❀ परिमलः ❀

**कार्येति** । घटादिकं कार्यं हि घटप्रागभावस्य प्रतियोगीति तत्र प्रागभावप्रतियोगित्वरूपकार्यलक्षणसमन्वयः । 'अभावप्रतियोगित्व'मात्रस्य गगनेऽतिव्याप्तिः, गगनाभावप्रतियोगित्वस्य तत्रापि सत्त्वादतः'प्रागभावे'ति । तथा च गगनस्य नित्यतया प्रागभावप्रतियोगित्वविरहान्न दोषः ।

समवेतं = समवायेन वर्त्तमानं, कार्यं = घट–पटादि । **यस्मिन्निति** । यत्र समवायेन यत्कार्यमुत्पद्यते तत्प्रति तत् समवायिकारणमिति—यथाश्रुते कपालादेर्द्रव्यत्वादिनाऽपि घटसमवायिकारणत्वापत्तिरतः 'यद्धर्मावच्छिन्नं स्वकारणतावच्छेदकयद्धर्मावच्छिन्ने समवायसम्बन्धेनोत्पद्यते, तद्धर्माव-

**यथा तन्तवः पटस्य, पटश्च स्वगतरूपादेः ।**

❀ न्यायबोधिनी ❀

समवायेन सम्बद्धं सत्, कार्यमुत्पद्यते तत्समवायिकारणमित्यर्थः । उदाहरणम्—**यथा तन्तव इति ।** येषु तन्तुषु समवायेन सम्बद्धं सत्पटात्मकं कार्यमुत्पद्यते ते तन्तवः समवायिकारणमित्यर्थः । सामान्यलक्षणन्तु,—समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति । समवायसम्बन्धेन घटाधिकरणे—कपालादौ—कपालादेः तादात्म्यसम्बन्धेनैव सत्त्वात्—समवायसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकपालत्वाद्यवच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः । समवायेन जन्यभावत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन द्रव्यस्यैव कारणत्वाज्जन्यभावेषु द्रव्यगुणकर्मसु त्रिषु द्रव्यमेव समवायिकारणम्, द्रव्ये तु द्रव्यावयवा समवायिकारणम्, अतो गुणादावपि द्रव्यमेव समवायिकारणमित्याशयेनाह—**पटश्च स्वगतरूपादेरिति ।** 'समवायिकारण'मित्यनुषज्यते ।

❀ परिमलः ❀

च्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारण'मित्यर्थः । घटत्वाद्यवच्छिन्नं हि स्वकारणतावच्छेदककपालत्वाद्यवच्छिन्ने समवायेनोत्पद्यत इति घटत्वाद्य-

---

१ **समवायसम्बन्धेनेति ।** घटः समवायेन कपाले, तत्र च तादात्म्येन कपालस्तिष्ठतीति समवायसम्बन्धावच्छिन्ना घटे कार्यता, तादात्म्यसम्बन्धावच्छिन्ना कपाले कारणताऽस्त्येवेति समन्वयः । 'समवायसम्बन्धावच्छिन्नकार्यता'निवेशानादरे घटप्रत्यक्षनिमित्तकारणे घटे समवायिकारणतापत्तिः, विषयतासम्बन्धावच्छिन्नघटादिप्रत्यक्षत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताया घटे सत्त्वात्, समवायसम्बन्धावच्छिन्नत्व' निवेशे तु विषयतासम्बन्धेनैव घटप्रत्यक्षं, न समवायेनेति न दोषः । कारणतायां 'तादात्म्यसम्बन्धावच्छिन्नत्वा'ऽनिवेशे—कपालद्वयसंयोगे घटासमवायिकारणे समायिकारणत्वापत्तिः, समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतायाः कपालद्वयसंयोगे सत्त्वात् । कपालयुगले समवायेन कपालद्वयसंयोगस्य वर्त्तमानत्वात् ।

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति यत् कारणं तदसमवायिकारणम्, यथा तन्तुसंयोगः पटस्य, तन्तुरूपं पटरूपस्य,**

※ न्यायबोधिनी ※

असमवायिकारणं लक्षयति—**कार्येणेति**। असमवायिकारण द्विविधं,—कार्येण सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तत्–इत्येकम्, कारणेन सहैकस्मिन्नर्थे समवेतं सत् यत् कारणं तदपरमसमवायिकारणमित्यर्थः। अत्र 'कारणेने'त्यस्य स्वकार्यसमवायिकारणेनेत्यर्थः। जन्यद्रव्यमात्रे अवयसंयोगस्यैवासमवायिकारणत्वात्पटात्मककार्ये तदवयवतन्तुसंयोगस्यैवासमवायिकारणत्वमिति दर्शयन् प्रथममुदाहरति—**यथा तन्तुसंयोगः पटस्येति**। यथा (तन्तुसंयोगः) पटात्मककार्येण सहैकस्मिन्नर्थे तन्तौ समवायसम्बन्धेन विद्यमानत्वे सति कारणत्वात्पटात्मककार्यं प्रति तन्तुसंयोगोऽसमवायिकारणमित्यर्थः।

※ दीपिका ※

लक्षणमाह—**कार्येणेति**। 'कार्येणे'त्येतदुदाहरति—**तन्तुसंयोग इति**। कार्येण = पटेन सह, एकस्मिन् = तन्तौ समवेतत्वात् तन्तु-

※ परिमलः ※

वच्छिन्नं प्रति कपालत्वाद्यवच्छिन्नं समवायिकारणम्, 'स्वकारणतावच्छेदके' त्युक्तेर्न द्रव्यत्वादेर्घटादिसमवायिकारणतावच्छेदकत्वमिति भावः।

**कार्येणेति**। समवायसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणताश्रयत्वमित्यर्थः। यथा,—कार्यं–पटः, स च समवायेन तन्तुषु वर्त्तते, तत्रैव समवायेन तन्तुसंयोगोऽपि वर्त्तत इति—समवायसम्बन्धावच्छिन्नपटत्वावच्छिन्नकार्यतानिरूपिता या समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्ना कारणता–तदाऽश्रयत्वस्य तन्तुसंयोगे सत्वात्तन्तुसंयोगः पटासमवायिकारणम्।

**तदुभयभिन्नं कारणं निमित्तकारणम्, यथा तुरीवेमादिकं पटस्य ॥४०॥**

❀ न्यायबोधिनी ❀

द्वितीयमसमवायिकारणं 'कारणेन सहे'त्यादिना पूर्वोक्तं तदुदाहरति—**तन्तुरूपमिति।** कारणेन सह = पटरूपसमवायिकारणीभूतपटेन सह, एकस्मिन्नर्थे = तन्तुरूपेऽर्थे, समवेतत्वे सति कारणत्वात् तन्तुरूपं पटगतरूपस्यासमवायिकारणमित्यर्थः।

❀ दीपिका ❀

संयोगः पटस्यासमवायिकारणमित्यर्थः। 'कारणेन सहे'त्येतदुदाहरति—**तन्तुरूपमिति।** कारणेन पटेन सह एकस्मिन् = तन्तौ समवेतत्वात् तन्तुरूपं पटरूपस्यासमवायिकारणमित्यर्थः। निमित्तकारणं लक्षयति—**तदुभयेति।** समवाय्यसमवायिभिन्नकारणं निमित्तकारणमित्यर्थः।

❀ परिमलः ❀

एवं—समवायसम्बन्धावच्छिन्नकार्यतानिरूपित-स्वसमवायिसमवेतत्व-सम्बन्धावच्छिन्नकारणताश्रयत्वमपि—असमवायिकारणलक्षणम्, यथा—तन्तुरूपं पटरूपस्यासमवायिकारणं, तथाहि—कार्यं—पटरूपं, तत्समायिकारणं पटः, तत्र 'स्वसमवायिसमवेतत्व'सम्बन्धेन [ स्वं = तन्तुरूपं, तत्समवायिनः—तन्तवः, तत्र समवेतत्वं पटे इति रीत्या ] तन्तुरूपं वर्त्तत इति समवायसम्बन्धावच्छिन्न-पटरूपत्वा-ऽवच्छिन्नकार्यतानिरूपित-'स्वसमवायिसमवेतत्व' सम्बन्धावच्छिन्न—तन्तुरूपत्वावच्छिन्नकारणताश्रयत्वाल्लक्षणसमन्वयस्तन्तुरूपे सुलभ इति सङ्क्षेपः। **कारणेनेति।** स्वकार्यसमवायिकारणेन पटेनेत्यर्थः। स्वम् = असमवायिकारणत्वेनाभिमतं तन्तुरूपं, तत्कार्यं = पटगतं रूपं, तत्समवायिकारणं पट इति समन्वयः। ]

**तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ।**

❀ न्यायबोधिनी ❀

सामान्यलक्षणं तु समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवाय—स्वसमवायिसमवेतत्वा-न्यतरसम्बन्धावच्छिन्ना कारणता तदाश्रयत्वमसमवायिकारणत्वमिति । द्रव्यासमवायिकारणीभूतावयवसंयोगादौ तु समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपिता समवायसम्बन्धावच्छिन्ना कपालद्वयसंयोगनिष्ठा कारणता कपालद्वयसंयोगे वर्तते, एवमाद्यपतनक्रियायामाद्यस्यन्दनक्रियायां च गुरुत्वद्रवत्वे असमवायिकारणे भवतः, आद्यपतनक्रियां प्रति च समवायसम्बन्धेनैव तयोः कारणत्वात् । अवयविगुणभूतघटपटरूपादौ स्वअवयवगुणीभूतकपालतन्तुरूपादेः **स्व**पदग्राह्यकपालतन्तुरूपादिसमवायिकपालतन्त्वादि**समवेतत्व**सम्बन्धेनैव कारणत्वात्—तत्सम्बन्धावच्छिन्नकारणताश्रयत्वमवयवगुणीभूतकपालतन्तुरूपादौ वर्तते ।

निमित्तकारणं लक्षयति—**तदुभयभिन्नमिति** । समवायिकारणभिन्नत्वे सति, असमवायिकारणभिन्नत्वे सति, कारणत्वं निमित्तकारणस्य लक्षणमित्यर्थः ॥ ४० ॥

करणलक्षणमुपसंहरति—**तदेतदिति । यदसाधारणमिति ।**

❀ दीपिका ❀

**करणलक्षणमुपसंहरति —तदेतदिति ।** प्रत्यक्षलक्षणमाह—

❀ परिमलः ❀

**प्रत्यक्षेति ।** प्रत्यक्षज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं—प्रत्यक्षप्रमाणस्य लक्षणं बोध्यम् । 'अयं घट' इति प्रत्यक्षत्वावच्छिन्ना या कार्यता, तन्निरूपिता कारणता चक्षुरादिप्रत्यक्षप्रमाणनिष्ठा, तदाश्रयत्वं चक्षुरादाविति समन्वयः । चक्षु-र्विषय-संयोगादिव्यापारेऽतिव्याप्तिवारणाय चक्षुर्विषयसंयोगादि'व्यापारजनकत्वे सती'त्यपि लक्षणे पूरणीयम् ।

तत्र प्रत्यक्षज्ञानकरणं,—प्रत्यक्षम् ।

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् । तद् द्विविधम्—निर्विकल्पकं, सविकल्पकं चेति। तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम्।

❀ न्यायबोधिनी ❀

'व्यापारवत्त्वे सती'त्यपि पूरणीयम्, अन्यथा तन्तुकपालसंयोगयोरतिव्याप्तिः, तन्तुकपालसंयोगयोरपि कार्यत्वातिरिक्तपटत्व-घटत्वावच्छिन्नं प्रति कारणत्वाद-साधारणत्वमस्त्येवेत्यतस्तत्र करणत्ववारणाय 'व्यापारवत्त्वे सती'ति करण-लक्षणे विशेषणं देयम् । व्यापारत्वञ्च,—तज्जन्यत्वे सति तज्जन्यजनकत्वम्, भवति हि दण्डजन्यत्वे सति दण्डजन्यघटजनकत्वाद्भ्रम्यादेर्दण्डव्यापारत्वम् । एवं कपालसंयोगतन्तुसंयोगादेरपि कपालतन्तुव्यापारत्वं,—कपालतन्तुजन्यत्वे सति कपालतन्तुजन्यघटपटजनकत्वात् । करणलक्षणेऽसाधारणत्वविशेषणा-नुपादाने ईश्वरादृष्टादेरपि व्यापारवत्कारणत्वं स्यात्, अतस्तत्रातिव्याप्ति-वारणायाऽसाधारणेति विशेषणम् ।

षड्विधेन्द्रियभूतप्रत्यक्षप्रमाणस्य लक्षणमाह—तत्रेति । प्रमाभूत-प्रत्यक्षादिषु प्रत्यक्षात्मकं यज्ज्ञानं चाक्षुषादिप्रत्यक्षं तत्प्रति व्यापारवद-

❀ दीपिका ❀

तत्रेति । प्रमाणचतुष्टयमध्ये इत्यर्थः । प्रत्यक्षज्ञानस्य लक्षणमाह—इन्द्रियेति । इन्द्रियं= चक्षुरादिकम्, अर्थः =घटादिः, तयोः सन्निकर्षः= संयोगादिः, तज्जन्यं ज्ञानमित्यर्थः । तद्विभजते—तद्द्विविधमिति । निर्विकल्पकस्य लक्षणमाह—निष्प्रकारकेति । विशेषणविशेष्यसम्बन्धानवगाहि ज्ञानमित्यर्थः ।

❀ परिमलः ❀

'संयोगादि'रित्यादिपदेन संयुक्तसमवायादिकं ग्राह्यम् ।

विशेषणेति । 'ज्ञानत्वे सति विशेष्यताशून्यत्वं'—निष्प्रकारकत्व-मित्यर्थः । एवं—'ज्ञानत्वे सति प्रकारताशून्यत्वं','ज्ञानत्वे सति संसर्गता-शून्यत्व'मित्यपि तल्लक्षणं वेदितव्यम् ।

❀ दीपिका ❀

ननु निर्विकल्पके किं प्रमाणमिति चेन्न, 'गौ'रिति विशिष्टज्ञानं

❀ न्यायबोधिनी ❀

साधारणं कारणमिन्द्रियं भवति, अतः प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षस्य लक्षणम्। आद्यसन्निकर्षातिरिक्तचतुर्विधसन्निकर्षाणां समवायरूपत्वेनेन्द्रियजन्यत्वाभावाद्व्यापारत्वं न सम्भवतीति इन्द्रियमनःसंयोगस्यैव बाह्यप्रत्यक्षे जननीये इन्द्रियव्यापारता बोध्या, मानसप्रत्यक्षे त्वात्ममनःसंयोगस्यैव सा बोध्या।

प्रत्यक्षप्रमाणलक्षणमुक्त्वा प्रत्यक्षप्रमालक्षणमाह—**इन्द्रियार्थसन्निकर्षेति**। जन्यप्रत्यक्षस्यैव लक्ष्यत्वमित्यभिप्रायेणेदं लक्षणम्। ईश्वरप्रत्यक्षसाधारणं तु—**ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति**। ज्ञानं = व्याप्तिज्ञानं, सादृश्यज्ञानं, पदज्ञानं च, तदेव करणं येषां तानि ज्ञानकरणकानि = अनुमित्युपमितिशाब्दानि, तद्भिन्नं प्रत्यक्षमित्यर्थः। प्रत्यक्षे इन्द्रियाणामेव करणत्वं न तु ज्ञानस्य, तथा च ज्ञानाकरणकज्ञानत्वस्य प्रत्यक्षसामान्य एव सत्त्वाल्लक्षणसङ्गतिः। प्रत्यक्षं विभजते—**निर्विकल्पकमिति**।

तल्लक्षयति—**तत्र निष्प्रकारकमिति**। प्रकारताशून्यज्ञानत्वमेव निर्विकल्पकत्वमित्यर्थः। निर्विकल्पके चतुर्थी विषयता स्वीक्रियते। त्रिविधविषयतामध्ये एकापि तत्र नास्ति। अतो 'विशेष्यताशून्यज्ञानत्वं' 'संसर्गताशून्यज्ञानत्व'मित्यपि लक्षणं सम्भवति।

सविकल्पकं लक्षयति—**सप्रकारकमिति**। विषयताया ज्ञाननिरूपितत्वाज्ज्ञानस्य विषयतानिरूपकत्वेन प्रकारतानिरूपकज्ञानत्वं सविकल्पकस्य लक्षणम्। एवं 'विशेष्यतानिरूपकज्ञानत्वं' संसर्गतानिरूपकज्ञानत्व'मित्यपि लक्षणं सम्भवति। उदाहरणम्—**यथेति**। इदन्त्वावच्छिन्नविशेष्यतानिरू-

❀ परिमलः ❀

निर्विकल्पकज्ञानस्येन्द्रियजन्यज्ञानाऽविषयतया तत्र प्रत्यक्षप्रमाणाऽसम्भवादनुमानं प्रमाणयति—**गौरितीति**। विशिष्टज्ञानं = सविकल्पकं—विशेष्य–विशेषणभावावगाहि—ज्ञानम्।

## —सविकल्पकम् ।

❀ दीपिका ❀

विशेषणज्ञानजन्यं, विशिष्टज्ञानत्वात्, दण्डीति ज्ञानव'दित्यनुमानस्य प्रमाणत्वात्, विशेषणज्ञानस्यापि सविकल्पकत्वेऽनवस्थाप्रसङ्गान्निर्विकल्पकसिद्धिः । सविकल्पकं लक्षयति—सप्रकारकमिति । नाम-जात्यादि-विशेषण-विशेष्य-सम्बन्धावगाहि ज्ञानमित्यर्थः ।

❀ न्यायबोधिनी ❀

पितडित्थत्वप्रकारताशालिज्ञानम्, इदन्त्वावच्छिन्नविशेष्यतानिरूपितब्राह्मणत्वप्रकारताशालिज्ञानं च सविकल्पकमित्यर्थः ॥ ४१ ॥

❀ परिमलः ❀

'गौ'रिति ज्ञानस्य च गोत्वविशिष्टगवावगाहितया विशिष्टज्ञानत्वं बोध्यम् । विशेषणज्ञानजन्यं = गोत्वज्ञानजन्यं, ज्ञानवत् = विशिष्टज्ञानवत्, विशेषणज्ञानस्य = निर्विकल्पकगोत्वज्ञानस्य, सविकल्पकत्वे = गोत्वविशिष्टगवावगाहित्वे, [ —विशेष्यविशेषणभावावगाहित्वे ], अनवस्थेति । विशेषणज्ञानस्य सविकल्पकत्वे, सविकल्पकज्ञानस्य विशिष्टबुद्धित्वेन—विशेषणज्ञानजन्यत्वनियमात्, तदर्थं विशेषणज्ञानमावश्यकं, तच्च सविकल्पकमिति तदर्थं पुनर्विशेषणज्ञानमावश्यकमित्यनवस्थाप्रसङ्ग इत्यर्थः । अयम्भावः—घटचक्षुःसंनिकर्षानन्तरमेव घटत्वविशिष्टं 'घटः' इति ज्ञानं न सम्भवति, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया पूर्वं विशेषणीभूतघटत्वज्ञानाऽभावे विशिष्टबुद्धेरसम्भवात्, अतो घटचक्षुःसंनिकर्षानन्तरं प्रथमं घट-घटत्ववैशिष्ट्यानवगाहि ज्ञानं भवति, तदेव निर्विकल्पकमिति । नाम=द्रव्यं—दण्डादि । 'जात्यादि'रित्यादिपदाद्गुणकर्मणोर्ग्रहणं । अतएव मूले उदाहरणचतुष्टयोपादानम् । तथा च ज्ञानत्वे सति—विशेष्यावगाहित्वं, विशेषणावगाहित्वं, संसर्गावगाहित्वञ्चेति सप्रकारकलक्षणत्रयं फलितम् ।

यथा डित्थोऽयं, ब्राह्मणोऽयं, श्यामोऽयं, पाचकोयमिति ॥४१॥

प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः—षड्विधः—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति । (१)—चक्षुषा घटप्रत्यक्ष-

॥ दीपिका ॥

सविकल्पकमुदाहरति—यथेति ।

इन्द्रियार्थसन्निकर्षं विभजते—प्रत्यक्षेति । संयोगसन्निकर्ष-मुदाहरति—चक्षुषेति । द्रव्यप्रत्यक्षे सर्वत्र संयोगः सन्निकर्ष इत्यर्थः । आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्ष-

॥ न्यायबोधिनी ॥

चाक्षुषादिषड्विधप्रत्यक्षकारणीभूतान् षड्विधसन्निकर्षान्विभजते—संयोग इत्यादि । [1]द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगस्य कारणत्वम्, द्रव्यसमवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्तसमवायस्य हेतुत्वम् । द्रव्यसमवेत-समवेतवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयुक्त-समवेतसमवायस्य हेतुत्वम् ।

॥ परिमलः ॥

संयुज्यते = आत्ममनसोः संयोगो भवति, 'ततः आत्मनः प्रत्यक्षं भवती'ति शेषः । इन्द्रियेण = चक्षुरादिना, 'संयुज्यते' इति शेषः । अर्थेन =

---

१. द्रव्यवृत्तीति । घटादिद्रव्येषु लौकिकविषयतासम्बन्धेन प्रत्यक्षात्मकं ज्ञानं तिष्ठति, तत्र चक्षुःसंयोगोऽपि समवायेन तिष्ठतीति कार्यकारणयोः सामानाधिकरण्यं । द्रव्यसमवेतं = घटादिनिष्ठनीलरूपादिकं, तत्प्रत्यक्षे चक्षुःसंयुक्त-घट-समवायस्य रूपादि-निष्ठस्य कारणत्वं । द्रव्यसमवेतसमवेतं = घटादि-द्रव्यसमवेत नीलरूपादि-समवेतं-नील-त्वादि सामान्यम् ।

जनने संयोगः सन्निकर्षः। (२)—घटरूपप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपस्य समवायात् । (३)—रूप-

❁ दीपिका ❁

ज्ञानमुत्पद्यते । संयुक्तसमवायमुदाहरति—घटरूपेति । तत्र युक्तिमाह—चक्षुःसंयुक्त इति । संयुक्तसमवेतसमवायमुदाहरति—रूपत्वेति ।

❁ न्यायबोधिनी ❁

द्रव्यग्राहकाणीन्द्रियाणि=चक्षुस्त्वङ्मनांसि त्रीण्येव, अन्यानि घ्राणरसनश्रवणानि गुणग्राहकाणि, अतस्त्वगिन्द्रियस्थले [1]द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन त्वाचत्वावच्छिन्नं प्रति त्वक्संयोगस्य हेतुता, एवं द्रव्यसमवेतत्वाचत्वावच्छिन्नं प्रति त्वक्संयुक्तसमवायस्य हेतुता, द्रव्यसमवेतोष्णत्वशीतत्वादिजातिस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायस्य हेतुता ।

एवमात्ममानसप्रत्यक्षे मनःसंयोगस्य हेतुता, आत्मसमवेतसुखादिमानसप्रत्यक्षे मनःसंयुक्तसमवायस्य हेतुता, आत्मसमवेतसमवेतसुखत्वादिमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायस्य हेतुता । रसन-घ्राणयोस्तु रसगन्ध—तद्गतजाति-ग्राहकत्वेन द्वितीयतृतीययोः[2] सन्निकर्षयोरेव तत्र हेतुता वाच्या ।

श्रवणेन्द्रियस्याकाशस्वरूपत्वेन शब्दस्याकाशगुणत्वेन श्रवणेन्द्रियेण समं शब्दस्य समवायः सन्निकर्षः, शब्दवृत्तिशब्दत्वकत्वखत्वादिजाति-

---

१. द्रव्यं—घटः, द्रव्यसमवेतम्—उष्णस्पर्शादिकं, तत्समवेतश्च—उष्णत्वादिसामान्यम् । आत्ममानसप्रत्यक्षे = आत्मनो मानसप्रत्यक्षे ।

२. द्वितीय-तृतीययोरिति । रसनसंयुक्तमिष्टान्नादि—समवेत—मधुरादिरस-प्रत्यक्षे रसनसंयुक्तसमवायस्य, मधुरत्वप्रत्यक्षे रसनसंयुक्तसमवेतसमवायस्य च हेतुतेत्यर्थः । प्रथमो रसनसंयोगस्तु न कारणं, रसनसंयुक्तस्याम्रादेस्तेनेन्द्रियेणाप्रत्यक्षात् ।

त्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः,-चक्षुः संयुक्ते घटे रूपं समवेतं, तत्र रूपत्वस्य समवायात्। (४) श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः, कर्णविवरवर्त्याऽऽकाशस्य श्रोत्रत्वात्, शब्दस्याकाशगुणत्वात्, गुणगुणिनोश्च समवायात्। (५)-शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्।

❀ दीपिका ❀

समवायमुदाहरति— **श्रोत्रेणेति**। तदुपपादयति—**कर्णेति**। ननु दूरस्थशब्दस्य कथं श्रोत्रेण सम्बन्ध इति चेन्न, 'वीचीतरङ्ग'न्यायेन 'कदम्बमुकुल'न्यायेन वा शब्दाच्छब्दान्तरोत्पत्तिक्रमेण-श्रोत्रदेशे जातस्य—श्रोत्रसम्बन्धात्प्रत्यक्षत्वसम्भवात्। समवेतसमवायमुदाहरति-**शब्दत्वेति**।

❀ परिमलः ❀

घटादिना, 'संयुज्यते' इति शेषः। **दूरस्थेति**। न च दूरस्थशब्देऽपि नभोरूपश्रोत्रसम्बन्धः सुलभ इति वाच्यम्, अतिदूरस्थशब्दश्रवणापत्तिवारणाय कर्णविवरावच्छिन्ननभोऽनुयोगिकसमवायस्यैवादरणीयतया तस्य दूरस्थशब्देऽभावात्, अतो'वीचीतरङ्ग'न्यायेन शब्दाच्छब्दान्तरोत्पत्तिपर्यन्तानुसरणम्, एवञ्च दूरस्थशब्दस्यापि कर्णावच्छिन्ननभोरूपश्रोत्रे उत्पत्त्या तत्प्रत्यक्षमित्याशयः। **वीचीतरङ्गेति**। ताडितात्सलिलात् तरङ्ग उत्पद्यते, ततोऽपि व्यापकोऽन्यस्तरङ्ग इत्यादि रीत्या शब्दाच्छब्दान्तरमुत्पद्यते, इति भेरीदेशावच्छेदेन शब्दोत्पत्त्यनन्तरं श्रोत्रेऽपि क्रमशः शब्दमुत्पद्यते, तस्य च श्रोत्रेण प्रत्यक्षमित्याशयः। **कदम्बेति**। भेरीदण्डसंयोगेन गगने एकः शब्द उत्पद्यते, तेन दशसु दिक्षु शब्दास्तैश्च पुनस्तथैव दशदिगवच्छेदेन शब्दा इति कदम्बकोरकसाम्यम्। तेषां श्रोत्रेप्युत्पत्त्या च श्रोत्रेण ग्रह इति भावः।

(६)–अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः, घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेष-

❀ दीपिका ❀

विशेषणविशेष्यभावमुदाहरति—अभावेति। तदुपपादयति-घटाभाववदिति। भूतलं-विशेष्यम्। घटाभावो—विशेषणम्। 'भूतले घटो नास्ती'त्यत्राभावस्य विशेष्यत्वं द्रष्टव्यम्।

एतेनानुपलब्धेः प्रमाणान्तरत्वं निरस्तं, 'यद्यत्र घटोऽभवि-

❀ न्यायबोधिनी ❀

विषयकश्रावणप्रत्यक्षे समवेतसमवायस्य हेतुता च बोध्या। अभावप्रत्यक्ष इति। विशेषणविशेष्यभावो नाम विशेषणतासन्निकर्षः। पञ्चविधसन्निकर्षोपरि विशेषणता योजनीया, 'संयोग'स्थाने 'संयुक्त'पदं 'समवाय'स्थाने 'समवेत'पदं च घटयित्वा अभावस्थले निर्वाह्यम्, [1]तथा हि द्रव्याधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तविशेषणता, द्रव्यसमवेताधिकरणकाभावप्रत्यक्षे इन्द्रियसंयुक्तसमवेतविशेषणता, द्रव्यसमवेतसमवेताधिकरणकाभावप्रत्यक्षे संयुक्तसमवेतसमवेतविशेषणता च सन्निकर्षः।

❀ परिमलः ❀

भूतलं विशेष्यं = 'घटाभाववद्भूतल'मित्यत्र भूतलं विशेष्य। इत्यत्र = इत्यत्र तु, अभावस्य = घटाभावस्य, 'भूतलस्य प्रकारत्व'मिति शेषः। एतेन = अभावप्रत्यक्षे विशेषणविशेष्यभावसंनिकर्षजन्यत्वस्वीकारेण, प्रमाणान्तरत्वं = प्रत्यक्षादिचतुष्टयातिरिक्तप्रमाणत्वं, भट्टमतप्रसिद्धम्। अनुपलब्धेः प्रमाणान्तरत्वं निरस्यति—यद्यत्रेति। अत्र = चक्षुःसंयुक्तभूतले, भूतलमिवेति। यथा भूतलं चक्षुषा दृश्यते, तथा घटोऽपि दृश्येत, दर्शनाऽभावात्

१. द्रव्यं—घटः, द्रव्यसमवेतं—नीलरूपादिकं तद्वृत्तिरभावः—पीतरूपाद्यभावः, द्रव्यसमवेतसमवेतं—नीलत्वादिकम्।

❀ दीपिका ❀

व्यत्तदा भूतलमिवाद्रक्ष्यत्, दर्शनाभावान्नास्ती'ति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धिसहकृतेनेन्द्रियेणैवाभावज्ञानोपपत्तावनुपलब्धेः प्रमाणान्तरत्वासम्भवात् । अधिकरणत्वज्ञानार्थमपेक्षणीयेन्द्रियस्यैव

❀ न्यायबोधिनी ❀

तत्र घटे पटत्वाभावः संयुक्तविशेषणतया गृह्यते, घटसमवेतघटत्वादौ पृथिवीत्वाभावः संयुक्तसमवेतविशेषणतया गृह्यते, घटसमवेतरूपत्वादौ नीलत्वाभावश्च—संयुक्तसमवेतसमवेतविशेषणतया गृह्यते । तथा घट-द्रव्य-समवेतं घटत्वं, पृथिवीत्वादिकं, रूपादिकञ्च, तत्र नीलादौ पीतत्वाभावः,

❀ परिमलः ❀

= यतो घटोऽत्र न दृश्यतेऽतः, नास्ति = भूतले घटो नास्ति, तर्किता = आपादिता (घटाभाव—) प्रतियोगिनः = घटादेः, सत्त्वस्य = सत्त्वप्रसक्तेः— विरोधिनी या अनुपलब्धिः = घटाद्यनुपलब्धिः, तया सहकृतेन = विशिष्टेन, इन्द्रियेणैव = चक्षुरादिनैव, अभावज्ञानोपपत्तौ = घटाभावज्ञानोपपत्तौ,

नन्वस्तु घटादिग्राहकमिन्द्रियं, अभावग्राहिका त्वनुपलब्धिरेव प्रमाणान्तरीभूता स्यादित्यत आह—यद्यत्रेति । तर्कितं, = आपत्तिविषयीभूतं यत् प्रतियोगिसत्त्वं = घटादेर्वर्त्तमानत्वं, तस्य विरोधिनी = तदभावग्राहिका, अनुपलब्धिः = उपलम्भाभावः, तत्सहकृतेन = तत्सहकारित्ववता चक्षुरादिना घटाभावादेः प्रत्यक्षमित्यर्थः । अनुपलब्धौ 'तर्कितप्रतियोगिसत्त्वविरोधित्व'-विशेषणान्मनस्त्वाद्यभावानां न प्रत्यक्षापत्तिः, मनस्त्वादेः प्रतियोगिनः प्रत्यक्षाऽयोग्यतया तत्सत्त्वापादनस्य वक्तुमशक्यत्वात् । एतेन योग्यत्वविशिष्टाऽनुपलब्धेरेवेन्द्रियसहकारित्वं सूचितं । नन्विन्द्रियस्याभावप्रत्यक्षे करणत्वमनुपलब्धेस्तत्सहकारित्वमिति कल्पनापेक्षयाऽनुलब्धेः प्रमाणान्तरत्वकल्पनमेव युक्तमत आह—**अधिकरणेति** । अभावाधिकरणस्य भूतलस्य ज्ञानार्थं = प्रत्यक्षप्रमार्थम्, अवश्यमपेक्षणीयस्य चक्षुरादेः करणत्वोपपत्तौ

णत्वात् । एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षम् । तत्करणमिन्द्रियम् । तस्मात् इन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम् ॥४२॥

प्रत्यक्षं व्याख्यातम् ।

❀ दीपिका ❀

करणत्वोपपत्तावनुपलब्धेः करणत्वस्यायुक्तत्वात् । विशेषणविशेष्यभावो विशेषणविशेष्यस्वरूपमेव नातिरिक्तः सम्बन्धः । प्रत्यक्षज्ञानमुपसंहरंस्तस्य करणमाह—एवमिति । असाधारणकारणत्वादिन्द्रियं प्रत्यक्षज्ञानकरणमित्यर्थः । प्रत्यक्षमुपसंहरति—तस्मादिति ।

❀ इति दीपिकायां प्रत्यक्षपरिच्छेदः ❀

❀ न्यायबोधिनी ❀

घटत्वादिजातौ पटत्वाभावश्च वर्त्तते, स चाऽभावः संयुक्तसमवेतविशेषणता-सन्निकर्षेण गृह्यते, एवं नीलत्वादिजातौ पीतत्वाभावोऽपीन्द्रियसंयुक्त-समवेत-समवेत-विशेषणतासन्निकर्षेण गृह्यते, चक्षुः संयुक्त-घट-समवेतं नीलं, तत्समवेतं—नीलत्वं, तद्विशेषणता पीतत्वाभावे वर्त्तते—इति संक्षेपः॥४२॥

इति न्यायबोधिन्यां प्रत्यक्षपरिच्छेदः ।

❀ परिमलः ❀

=तत्करणकत्वेनैवाभावप्रत्यक्षोपपत्तौ, अनुपलब्धेः प्रमाणान्तरत्वकल्पनस्यायुक्तत्वमित्याशयः । ननु त्वयाऽपि विशेष्यविशेषणभावाख्यः सम्बन्धो घटाऽभावप्रत्यक्षार्थमतिरिक्तोऽभ्युपेय एवेति तदपेक्षयाऽनुपलब्धेः प्रमाणान्तरत्वमेव वरमिति चेदत आह—**विशेषणेति** । विशेषणविशेष्ययोर्घटाभावभूतलयोर्विशिष्टबुद्धिनियामकः स्वरूपाख्य एव सम्बन्धो, विशेषणस्वरूपो, विशेष्यस्वरूपश्च, न ततोऽभिद्यत इति तदाशयः ।

इति श्रीगुरुप्रसादशास्त्रिविरचिते—'अभिनवराजलक्ष्मीपरिमले'

❀ प्रत्यक्षखण्डम् ❀

—:०:—

# ❀ अथ अनुमानम् ❀

## अनुमितिकरणमनुमानम् ।

❀ दीपिका ❀

अनुमानं लक्षयति—'**अनुमितिकरण**मिति । अनुमितेर्लक्षण-

❀ न्यायबोधिनी ❀

अनुमानं लक्षयति—**अनुमितीति** । अनुमितौ व्याप्तिज्ञानं करणं, परामर्शो व्यापारः, अनुमिति–फलं, कार्यमित्यर्थः । परामर्शे–व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकत्वात्तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वमुपपन्नम् । अनुमितिकरणत्वमनुमानस्य लक्षणम् । अनुमानं = व्याप्तिज्ञानम् । एतस्य परामर्शरूपव्यापारद्वारा अनुमितिं प्रत्यसाधारणकारणतयाऽनुमितिकरणत्वमुपपन्नम् ।

❀ परिमलः ❀

**अनुमानमिति** । प्रत्यक्षकार्यत्वादनुमानस्य–प्रत्यक्षानन्तरमेव निरूपणमुचितमिति प्रत्यक्षोपजीवकत्वसङ्गत्याऽनुमानं निरूपयतीत्यर्थः । अनुमानं = व्याप्तिज्ञानम् । मूले—**अनुमितिकरणमिति** । अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वमित्यर्थः । तथा च 'पर्वतो वह्निमा'-नित्याकारकानुमितित्वावच्छिन्ना या कार्यता–तादृशानुमितिनिष्ठा, तन्निरूपिता या—'वह्निव्याप्यो धूमः' इत्याकारकव्याप्तिज्ञाननिष्ठा–कारणता, तदाश्रयत्वस्य व्याप्तिज्ञानात्मकेऽनुमाने सत्त्वाल्लक्षणसमन्वयः ।

'वह्निव्याप्यधूमवान्पर्वत'इत्याकारके परामर्शेऽनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताया अक्षततया तत्राऽतिव्याप्तिवारणाय 'व्यापारवत्त्वे सती'ति देयम्, 'अनुमितिजनकव्यापारजनकत्व'मिति च तदर्थः । तथा च परामर्शस्य व्यापारजनकत्वविरहान्न दोषः ।

## परामर्शजन्यं ज्ञानमनुमितिः।

❀ दीपिका ❀

आह—परामर्शेति। ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिः, स्थाणुपुरुष-संशयानन्तरं 'पुरुषत्वव्याप्यकरादिमानयम्' इति परामर्शे सति 'पुरुष-एव' इति प्रत्यक्षजननात्। न च तत्रानुमितिरेवेति वाच्यम्।

❀ न्यायबोधिनी ❀

**परामर्शजन्यमिति।** परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितेर्लक्षणम्। अत्र 'ज्ञानत्व'मात्रोपादाने प्रत्यक्षादावतिव्याप्तिः, अतस्तद्वारणाय 'परामर्श-जन्यत्वे सती'ति विशेषणोपादानम्। परामर्शजन्यत्वमात्रोक्तौ परामर्शध्वंसेऽति-व्याप्तिरतस्तद्वारणाय 'ज्ञानत्वो'पादानम्।

❀ परिमलः ❀

**परामर्शेति।** परामर्शजन्यत्वे सति ज्ञानत्वमित्यर्थः। 'वह्निव्याप्य-धूमवान् पर्वतः' इत्याकारकपरामर्शजन्यत्वस्य 'पर्वतो वह्निमा'नित्यनु-मितौ सत्त्वाल्लक्षणसमन्वयः। अयमत्र क्रमः—'पर्वतो धूमवा'निति पक्ष-धर्मताज्ञानानन्तरं—'वह्निव्याप्यो धूम' इति व्याप्तिस्मरणाद् 'वह्निव्याप्य-धूमवान् पर्वत'इति परामर्शस्ततः 'पर्वतो वह्निमा'नित्यनुमितिर्भवतीति।

संशयोत्तरजायमानप्रत्यक्षं प्रति 'पुरुषत्वव्याप्यकरादिमानय'मिति परामर्शस्य विशेषदर्शनविधया हेतुत्वात्संशयोत्तरप्रत्यक्षे परामर्शजन्यत्वस्य सत्त्वादनुमितिलक्षणाऽतिव्याप्तिरिति शङ्कते—**नन्विति।** विरुद्धकोटिद्वयाव-गाहिज्ञानं हि संशयः, यथा'स्थाणुर्वा पुरुषो वे'ति, अत्र पुरोवर्त्तिनि वस्तुनि पुरुषत्व-तद्विरुद्ध-स्थाणुत्वोभयरूपं यत्कोटिद्वयं, तदवगाहित्वात्संशयत्वम्।

**परामर्श इति।** 'पुरुषत्वव्याप्यकरादिमानय'मिति ज्ञानस्य,—व्याप्ति-प्रकारकत्वेन, इदन्त्वावच्छिन्नपक्षसम्बन्धविषयकत्वेन च परामर्शलक्षणा-क्रान्तत्वात्परामर्शात्मकत्वमिति भावः। तत्र = संशयोत्तरप्रत्यक्षे। **अनुव्य-**

❀ दीपिका ❀

'पुरुषं साक्षात्करोमी'त्यनुव्यवसायविरोधादिति चेन्न, पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात्। सिषाधयिषाविरहसहकृतसिद्ध्यभावः पक्षता। साध्यसिद्धिरनुमितिप्रतिबन्धिका, सिद्धिसत्त्वेऽपि

❀ परिमलः ❀

वसायेति। ईदृशानुव्यवसायस्य प्रत्यक्षानन्तरमेव जायमानतया 'पुरुष एवे' त्यस्यानुमितित्वासम्भवात्। 'पुरुषमनुमिनोमी'त्यनुव्यवसायाभावाच्च।

समाधत्ते—नेति। पक्षतासहकृतपरामर्शनिष्ठजनकतानिरूपितजन्यत्वस्यानुमितिलक्षणतया पक्षताविरहेऽपि जायमाने पुरुष एवायमिति निश्चये दोष इत्यर्थः। अयम्भावः,—संशयोत्तरं जायमाने 'पुरुष एवाय'मिति प्रत्यक्षे परामर्शजन्यत्वेऽपि तादृशपरामर्शसहकारितया पक्षतायाः स्वीकारे प्रयोजनाभावात्पक्षतासहकृतपरामर्शजन्यत्वविरहान्नानुमितिलक्षणातिव्याप्तिः, सिद्धौ सत्यां सिषाधयिषायाश्च विरहेऽपि पुरुष एवायमिति प्रत्यक्षोदयात्पक्षतायाः 'पुरुषत्वव्याप्यकरादिमानय'मितिपरामर्शकालेऽभावात्। विश्वनाथभट्टाचार्यास्त्वन्यथैव समादधुः—"यत्राऽयं पुरुषो नवेति संशयानन्तरं पुरुषत्वव्याप्यकरादिमानय'मिति ज्ञानं—तत्राऽसत्यामनुमित्सायां पुरुषस्य प्रत्यक्षं भवति, न त्वनुमितिः, अतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनीजिज्ञासादिवत्स्वातन्त्र्येण प्रतिबन्धिका" इति।

ननु साध्यसन्देहस्य पक्षतात्वेऽपि यत्र घनगर्जनश्रवणान्मेघानुमितिस्तत्र साध्यसंशयाभावात्पक्षतात्वाभावेन व्यभिचारः स्यादतो निष्कृष्टं पक्षतालक्षणं प्रदर्शयति—सिषाधयिषेति। सिषाधयिषा = प्रकृतपक्षे प्रकृतसाध्यानुमितीच्छा। प्रकृतपक्षे प्रकृतसाध्यनिश्चयः—सिद्धिः। एवञ्च सिषाधयिषाविरहविशिष्टा या सिद्धिः, तदभावः—पक्षतेत्यर्थः। अयम्भावः,—सत्यपि परामर्शे, पक्षे साध्यनिश्चयसत्त्वेऽनुमितेरनुदयादनुमितिं प्रति पक्षताया हेतुत्वं कल्प्यते, तत्र सिषाधयिषामात्रं न पक्षता, सिषाधयिषाविर-

❀ दीपिका ❀

'अनुमिनुया'मितीच्छायामनुमितिदर्शनात् सिषाधयिषोत्तेजिका। ततश्चोत्तेजकाभावविशिष्टमण्यभावस्य दाहकारणत्ववत् सिषाधयिषाविरहकृतसिद्ध्यभावस्याप्यनुमितिकारणत्वम्।

❀ परिमलः ❀

हेऽपि वनगर्जनेन मेघानुमितेर्दर्शनात्, एवं—सिद्ध्यभावमात्रमपि न पक्षता, सिद्धिसत्त्वेऽपि सिपाधयिषासत्त्वेऽनुमितेर्दर्शनात्, अतः—सिपाधयिषाविरहविशिष्टाया सिद्धेरभावः पक्षता, वैशिष्ट्यञ्च—सामानाधिकरण्यसम्बन्धेन, तच्च—एकाधिकरणवृत्तित्वं, निरवच्छिन्नस्वरूपेणानुमित्साविरहवत्यात्मनि समवायेन साध्यनिश्चयस्तस्याभावः पक्षता।

साध्यसिद्धिः = पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नसाध्यनिश्चयः, उत्तेजिका = सिद्धिनिष्ठा याऽनुमितिप्रतिबन्धकता, तदवच्छेदकीभूताभावप्रतियोगिनी, **उत्तेजकाभावेति।** चन्द्रकान्तो मणिर्दाहप्रतिबन्धकः, तत्र चन्द्रकान्तमणिसत्त्वेऽपि सूर्यकान्तमणिसमवधाने दाहोत्पत्तेः सूर्यकान्तस्योत्तेजकत्वं कल्प्यते, तथा च—'उत्तेजकाभावविशिष्टमण्यभावस्ये'त्यस्य— सूर्यकान्तमण्यभावविशिष्टचन्द्रकान्तमण्यभावस्येत्यर्थः। **सिषाधयिषेति।** अनुमित्सारूपोत्तेजकविरहविशिष्टाया सिद्धिः तदभाव इत्यर्थः। सिद्धिश्च—'पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्चे'ति समूहालम्बनात्मिका, अत्र साध्यस्य वह्नेः पर्वते निश्चयोऽस्ति—'वह्निमा'निति। सिपाधयिषाऽपि नास्त्यतोनुमितिरत्र न भवति। यदि सिपाधयिषा स्यात् ('अनुमितिर्जायता'मितीच्छा,) तदा सिद्धिरूपप्रतिबन्धकसत्त्वेऽपि अनुमितीच्छारूपोत्तेजकसमवधानादनुमितिर्भवत्येवेत्याशयः। एवञ्च यत्र साध्यनिश्चयः स्यात्तत्र नानुमितिः, यत्र तु साध्यनिश्चयः स्यादनुमितीच्छाऽपि स्यात्तत्रानुमितिर्भवत्येव, यत्र सिपाधयिषाऽपि नास्ति, सिद्धिरपि नास्ति, तत्राप्यनुमितिर्भवत्येव, प्रतिबन्धकाभावात्, यथा—वनगर्जनान्मेघानुमितिः सिपाधयिषाविरहेऽपि भवत्येवेति हृदयम्।

**व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः। यथा 'वह्निव्याप्य-**

❀ दीपिका ❀

परामर्शं लक्षयति—व्याप्तीति। व्याप्तिविषयकं यत् पक्षधर्मताज्ञानं स परामर्श इत्यर्थः। परामर्शमभिनीय दर्शयति—यथेति।

❀ न्यायबोधिनी ❀

अनुमितिलक्षणघटकीभूतपरामर्शलक्षणमाचष्टे—**व्याप्तिविशिष्टेति।** व्याप्तिविशिष्टं च तत्पक्षधर्मताज्ञानञ्च इति कर्म्मधारये—विशिष्टपदस्य प्रकारतानिरूपकपरत्वात् 'पक्षधर्मताज्ञान'मित्यत्र षष्ठ्या विषयत्वबोधनात्, 'धर्मता'पदस्य सम्बन्धार्थकत्वात्, कर्मधारयसमासे समस्यमानपदार्थयोरभेदसंसर्गलाभाच्च,—'व्याप्तिप्रकारकाभिन्नं यत्पक्षसम्बन्धविषयकं ज्ञानं तत्परामर्श' इति लभ्यते। एवं सति 'धूमो वह्निव्याप्यः, आलोकवान्पर्वतः' इत्याकारकसमूहालम्बनेऽप्युक्तपरामर्शलक्षणमस्तीत्यतिव्याप्तिस्तद्वारणाय पक्षनिष्ठविशेष्यतानिरूपिता या [1]हेतुनिष्ठा प्रकारता तन्निरूपिता या व्याप्तिनिष्ठा प्रकारता तच्छालिज्ञानं परामर्श इति निष्कर्षः। एतादृशपरामर्शजन्यत्वे-

❀ परिमलः ❀

व्याप्तिभ्रमाद्यत्रानुमितिस्तत्र व्याप्तिवैशिष्ट्यं न सम्भवति, भ्रमस्थले वैशिष्ट्याप्रसिद्धेरत आह—**व्याप्तिविषयकमिति।** विषयतानिरूपकत्वार्थकं 'विशिष्ट'पदमिति भावः। पक्षधर्मताज्ञानं = धूमादेर्हेतोः पक्षेण पर्वतेन सह वैशिष्ट्यावगाहिज्ञानं, पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकं निश्चयात्मकं ज्ञानमिति यावत्। तदुक्तं—'व्याप्यस्य पक्षवृत्तित्वं पक्षधर्मते'ति। तथा च व्याप्तित्वावच्छिन्नप्रकारतानिरूपित—पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकं ज्ञानं परामर्श इत्यर्थः। पर्वतत्वावच्छिन्नपर्वतनिष्ठविशेष्यतानिरूपितं वह्निनिरूपितव्याप्तित्वावच्छिन्नप्रकारकं ज्ञानं 'वह्निव्याप्यधूमवान् पर्वत'इति, तदेव

---

१ एवञ्च धूमे हेतौ-पर्वतरूपपक्षनिष्ठविशेष्यतानिरूपितप्रकारताया अभावान्न परामर्शलक्षणातिव्याप्तिः। तादृशप्रकारताया आलोक एव सत्त्वात्।

—धूमवानयं पर्वत' इति ज्ञानं परामर्शः। तज्जन्यं 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिः।

'यत्र यत्र धूमस्तत्राग्नि'रिति साहचर्यनियमो—व्याप्तिः।

※ दीपिका ※

अनुमितिमभिनीय दर्शयति—तज्जन्यमिति। परामर्शजन्यमित्यर्थः।

व्याप्तेर्लक्षणमाह—यत्रेति। 'यत्र धूमः तत्राग्निः' इति व्याप्ते-

※ न्यायबोधिनी ※

सति ज्ञानत्वमनुमितेर्लक्षणम्, अनुमितिपरामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम् — पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितसंयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति—वह्नित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपिता या धूमत्वावच्छिन्नप्रकारता-तन्निरूपितपर्वतत्वावच्छिन्नविशेष्यता तच्छालिनिर्णयः कारणम्। वन्हित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नविशेष्यतायाः,—धूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतायाश्चाभेदानङ्गीकर्तृमते,—वह्नित्वावच्छिन्न—प्रकारतानिरूपितविशेष्यत्वावच्छिन्नव्याप्तित्वावच्छिन्नप्रकारतानिरूपित—विशेष्यत्वावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपित-पर्वतत्वावच्छिन्नविशेष्यताशालिनिर्णयः कारणमिति वाच्यं। स च निर्णयः 'वह्निव्याप्यधूमवान्पर्वत' इत्याकारको बोध्यः।

यत्र यत्रेति। 'यत्र'पदवीप्सा,—धूमाधिकरणे यावति वह्निमत्त्वलाभाय। यावत्पदमहिम्ना वह्नेर्धूमव्यापकत्वं लब्धं, तदेव स्पष्टयति—साहचर्यनियम इति। एतदर्थस्तु नियतसाहचर्यं व्याप्तिरिति, नियतत्वं =

※ परिमलः ※

परामर्श इति भावः। अभिनीय = शब्दमुच्चार्य—( स्थलं प्रकल्प्य, ) 'उदाहरणप्रदर्शनेन लक्षणं स्पष्टीकुरुते'इति तु भावः।

॥ दीपिका ॥

रभिनयः। 'साहचर्यनियमः' इति लक्षणम्। साहचर्यं सामानाधिकरण्यं, तस्य नियमः,—हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं—व्याप्तिरित्यर्थः।

॥ न्यायबोधिनी ॥

व्यापकत्वम्। साहचर्यं नाम,–सामानाधिकरण्यम्। तथा च धूमव्यापकवह्निसामानाधिकरण्यं व्याप्तिरित्यर्थः। अत्र वह्नेर्धूमव्यापकत्वं नाम,—धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वं। तथा हि—धूमाधिकरणे पर्वतचत्वरमहानसादौ वर्तमानो योऽभावः—घटत्वाद्यवच्छिन्नप्रतियोगिताकः, न तु वह्नित्वावच्छिन्नप्रतियोगिताकाभावः, कुतः? पर्वतादौ वन्हेः सत्त्वात्, एवं सति धूमाधिकरणे पर्वतचत्वरादौ वर्तमानस्य घटाद्यभावस्य प्रतियोगितावच्छेदकं घटत्वादिकमनवच्छेदकं वह्नित्वं तद्वत्त्वं वह्नौ वर्त्ततेऽतो धूमव्यापकत्वं वन्हौ वर्तते। इयमन्वयव्याप्तिः सिद्धान्तानुसारेण, पूर्वपक्षव्याप्तिस्तु साध्याभाववदवृत्तित्वम्, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक-प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यावच्छिन्नाभाव–वन्निरूपित-हेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावो व्याप्तिरित्यर्थः। तच्च केवलान्वयिन्यव्याप्तमिति—सिद्धान्तानुसरणम् ॥४३॥

॥ परिमलः ॥

अभिनयः = स्वरूपप्रदर्शनम्। व्याप्तेराकारोऽयमिति यावत्। लक्षणमिति। 'व्याप्ते'रिति शेषः। नियमः = नियतं हेतौ सामानाधिकरण्यं, हेतुव्यापकसाध्यसामानाधिकरण्य'मिति यावत्। व्यापकत्वञ्च तद्वन्निष्ठाऽत्यन्ताभावाप्रतियोगित्वम्। तथा च यत्फलितं तदाह–हेतुसमानाधिकरणेति। हेतुसमानाधिकरणो योऽत्यन्ताभावः, तदप्रतियोगि तत्साध्यं, तत्सामानाधिकरण्यं व्याप्तिरित्यर्थः। तथा च 'वह्निमान्धूमा' दित्यादौ–

**व्याप्यस्य पर्वतादिवृत्तित्वं—पक्षधर्मता ॥ ४३ ॥**

**अनुमानं द्विविधम्–स्वार्थं परार्थं च । तत्र स्वार्थं**

❀ दीपिका ❀

पक्षधर्मतास्वरूपमाह—व्याप्यस्येति ।

अनुमानं विभजते—**अनुमानमिति** । तद्द्वैविध्य दर्शयति—**स्वार्थमित्यादिना** । तत्रेति । उभयोमध्ये इत्यर्थः । स्वार्थानुमितिं-

❀ न्यायबोधिनी ❀

अनुमानं विभजते—**स्वार्थमिति** । स्वार्थानुमानं नाम न्यायाप्रयोज्यानुमानम् ।

न्यायप्रयोज्यानुमानं परार्थानुमानम् । न्यायत्वं च प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम् । अवयवत्वं च प्रतिज्ञाद्यन्यतमत्वम् ।

❀ परिमलः ❀

हेतु–धूमः, तदधिकरणं पर्वतः, तद्वृत्तिर्योऽत्यन्ताभावः–'घटो नास्ती'त्याद्यभावः, ( न तु वह्न्यभावः, वह्नेः पर्वते सत्त्वात् ) तत्प्रतियोगी–घटादिः, अप्रतियोगी वह्निः, तदधिकरणं-पर्वतः, तद्वृत्तित्वं धूम इति,–तत्र लक्षणसमन्वयः, तथा च धूमे वह्निनिरूपिता व्याप्तिः । 'धूमवान्वह्ने' रित्यत्राऽसद्धेतुस्थले तु–हेतुर्वह्निः, तदधिकरणम्–अयोगोलकं, तद्वृत्तिरत्यन्ताभावो 'धूमो नास्ती''ति, तत्प्रतियोग्येव धूम इति न तत्रातिव्याप्तिः, एवञ्च न तत्र धूमनिरूपिता वह्निनिष्ठा व्याप्तिरिति भावः ।

व्याप्यस्य = व्याप्तिविशिष्टस्य हेतोर्धूमादेः, पर्वतादिवृत्तित्वं = प्रकृतपक्ष–पर्वतादि–वृत्तित्वम् ।

अनुमानम्=अनुमितिकरणं–व्याप्तिज्ञानम् । **स्वार्थेति** । स्वस्य = अनुमातुः पुंसः, अर्थः=प्रयोजनम् , अनुमितिरूपं यस्मादिति व्युत्पत्त्या—यत्प्रयोज्या स्वस्यानुमितिः तत्–स्वार्थानुमानमित्यर्थः । व्याप्तिज्ञानप्रयोज्यानुमितिश्चानुमातुर्भवत्येव 'पर्वतो वह्निमान्' इत्यादौ । **स्वार्थानुमितिमिति ।**

स्वानुमितिहेतुः । तथा हि—स्वयमेव भूयोदर्शनेन 'यत्र धूमस्तत्राग्नि'रिति महानसादौ व्याप्तिं गृहीत्वा, पर्वतसमीपं गतः, तद्गते चाग्नौ संदिहानः, पर्वते धूमं पश्यन्, व्याप्तिं स्मरति 'यत्र धूमस्तत्राग्नि'रिति, तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वत'

❀ दीपिका ❀

दर्शयति—स्वयमेवेति । भूयोदर्शनेनेति । ननु पार्थिवत्वलोहलेख्यत्वादौ शतशः सहचारदर्शनेऽपि मण्यादौ व्यभिचारोपलब्धेर्भूयो-

❀ परिमलः ❀

स्वस्य = अनुमातुः, अर्थः = संशयनिवृत्तिरूपं प्रयोजनं यस्याः सेत्यर्थः । स्वीयसंशयनिवृत्तिफलिकामनुमितिमिति यावत् । [ मूले—स्वयमेव=अनुमातैव, भूयोदर्शनेन=साध्यसाधनयोः साहचर्येण, इति=इत्येवं व्याप्तिं, तद्गते= पर्वतस्थे, सन्दिहानः = 'पर्वते वह्निर्न वे'ति संशयास्कन्दितस्वान्तः ।

स्मरतीति । 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारक'मिति नियमात्, धूमदर्शनेन वह्निधूमव्याप्तिस्मरणमिति भावः । स्मृतिमभिनीय दर्शयति,- यत्र धूमस्तत्राग्निरितीति । तदनन्तरं=व्याप्तिस्मरणानन्तरं, ज्ञानमिति । इदमेव ज्ञानम्—'अनुमान'मित्युच्यते, अनेनैवानुमितेर्जननादिति भावः ।

अयमेव = अनुमानमेव, विधेयपरामर्शापेक्षया पुंल्लिङ्गता, तस्मात् = परामर्शात्मकानुमानात्, तदेतत् = परामर्शात्मकं—'वह्निव्याप्यधूमवान्पर्वतः' इति ज्ञानं । अयमत्र क्रमः 'तथाही'त्यादिग्रन्थेन सूचितः—आदौ भूयोदर्शनं,—( सहचारज्ञानं, ) ततो व्याप्तिग्रहः, ततः साध्यसन्देहरूपा पक्षता, ततः पर्वते धूमदर्शनेन 'धूमवान्पर्वत' इति पक्षधर्मताज्ञानं, ततो 'वह्निव्याप्यो धूम' इति व्याप्तिस्मरणं, ततः परामर्शः, ततोऽनुमितिरिति । ]

भूयोदर्शनस्य व्याप्तिग्रहहेतुत्वं न सम्भवतीत्याशङ्कते—नन्विति । पार्थिवत्वं—घटादौ, तत्र लोहेन कण्टकादिना लेख्यत्वमप्यस्ति, तदेव लोह॰

❀ दीपिका ❀

दर्शनेन कथं व्याप्तिग्रह इति चेन्न, व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात् ।

व्यभिचारज्ञानं द्विविधम्—निश्चयः, शङ्का च । तद्विरहः क्वचित्तर्कात्, क्वचित् स्वतः सिद्ध एव । धूमाग्न्योर्व्याप्तिग्रहे कार्यकारण-

❀ परिमलः ❀

भेद्यत्वपार्थिवत्वयोः साहचर्यस्य दर्शनेऽपि, मण्यादौ = हीरकादौ, व्यभिचारोपलब्धेः = कण्टकभेद्यत्वविरहाद्व्यभिचारात्, न हि व्यभिचारज्ञानसत्त्वे व्याप्तिनिश्चयो भवितुमर्हति, तथा च भूयोदर्शन न व्याप्तिग्राहकमिति सिद्धमिति शङ्कितुराशयः । **व्याप्तिग्राहकत्वादिति** । 'सहचारज्ञान'-पदेन व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्यैवाभिप्रेतत्वादित्यर्थः ।

**निश्चय इति** । यथार्थायथार्थभेदेन द्विविधं व्यभिचारज्ञानं—निश्चय'—'शङ्का'—पदाभ्यां प्रदर्शितमित्याशयः । तथा च "व्यभिचारज्ञानं द्विविधं, यथार्थमयथार्थञ्च, तदपि द्विविधं,—निश्चयः, शङ्का चे"त्येवमत्र व्याख्येयम् । व्यभिचारसंशयस्यापि व्याप्तिग्रहप्रतिबन्धकतया व्यभिचारनिश्चयसंशयोभयविरहसहकृतसहचारज्ञानस्य हेतुत्वमुपन्यस्तम् । प्रतिबन्धकाभावस्य कारणत्वात्—तद्विरहः = व्यभिचारशङ्काविरहः । **तर्कादिति** । धूमाग्न्योर्व्याप्तिग्रहे जायमाने 'धूमो वह्निव्यभिचारी न वे'ति शङ्कायां 'धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्या'दिति धूमवह्न्योः कार्य-कारणभावभङ्गप्रसङ्गरूपस्तर्को व्यभिचारज्ञानं निवर्त्तयतीति भावः । यत्र व्यभिचारशङ्कैव नास्ति स्वसामग्रीविरहात्—तत्र शङ्कानिवर्त्तकतर्कस्य प्रयोजनविरहान्नावतार इत्याह—**क्वचित्स्वतः सिद्ध एवेति** । तदुक्तं—'तर्कः क्वचिच्छङ्कानिवर्त्तक' इति—विश्वनाथभट्टाचार्यैः ।

ननु महानसीयवह्निधूमयोः संनिकृष्टतया सहचारग्रहेऽपि पर्वतादिदेशान्तरीयवह्निधूमानामिन्द्रियसन्निकर्षाऽसंभवात्कथं धमसामान्ये वह्निसा-

इति ज्ञानमुत्पद्यते, अयमेव लिङ्गपरामर्श उच्यते। तस्मात् 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिरुत्पद्यते,—तदेतत्स्वार्थानुमानम्।

❀ दीपिका ❀

भावभङ्गप्रसङ्गलक्षणस्तर्को व्यभिचारशङ्कानिवर्तकः। ननु सकलवह्निधूमयोरसन्निकर्षात्कथं व्याप्तिग्रह इति चेन्न, वह्नित्व-धूमत्वरूपसामान्यप्रत्यासत्त्या सकलवह्नि-धूमज्ञानसम्भवात्। तस्मादिति। लिङ्गपरामर्शादित्यर्थः।

❀ परिमलः ❀

सान्यस्य व्याप्तिग्रहः, तथा च पर्वतीयधूमदर्शनेन व्याप्तिस्मरणासम्भवात्परामर्शानुपपत्तिरिति शङ्कते—नन्विति। असन्निकर्षात् = इन्द्रियसम्बन्धाभावेन लौकिकसन्निकर्षाभावात्।

सकलवह्निधूमेषु लौकिसन्निकर्षाभावेऽपि सामान्यप्रत्यासत्त्यात्मकाऽलौकिकसन्निर्षसद्भावात्,—वह्नित्वावच्छिन्नसामानाधिकरण्येन निखिलधूमसहचारप्रत्यक्षसम्भवाद्देशान्तरीयधूमेषु व्याप्तिग्रहः सम्भवति, तथा च पर्वतीयधूमदर्शननेन व्याप्तिस्मरणसम्भवान्न परामर्शानुपपत्तिरित्याशयेन समाधत्ते—वह्नित्वेति। सामान्यप्रत्यासत्त्या = सामान्यलक्षणप्रत्यासत्त्या, तदुक्तं भट्टाचार्यैः—इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः, तथाहि, यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं 'धूम' इति ज्ञानं यत्र जातं, तत्र ज्ञाने धूमत्वं प्रकारः, तत्र धूमत्वेन सन्निकर्षेण 'धूमा' इति सकलधूमविषयकं ज्ञानं जायत—" इति। एवञ्च धूमत्व—वह्नित्वरूपं सामान्यं = जातिरेव—प्रत्यासत्तिरित्यर्थो बोध्यः। लिङ्गपरामर्शादिति। लिङ्गं हेतुर्धूमादिः, तत्परामर्शात् = तद्विषयकपरार्शात्मकज्ञानादित्यर्थः।

यत्तु स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयव-वाक्यं प्रयुज्यते, तत्परार्थानुमानम् । यथा 'पर्वतो वह्निमान्, धूमवत्त्वात्, यो यो धूमवान् स सोऽग्निमान्, यथा महानसम्, तथा चायम्, तस्मात्तथा'—इति । अनेन प्रतिपादिताल्लिङ्गा-त्परोऽप्यग्निं प्रतिपद्यते । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि

❁ दीपिका ❁

परार्थानुमानमाह—यत्त्विति । यच्छब्दस्य 'तत्परार्थानुमानम्' इति तच्छब्देनान्वयः । पञ्चावयववाक्यमुदाहरति—यथेति । अव-यवस्वरूपमाह–प्रतिज्ञेति । उदाहृतवाक्येषु प्रतिज्ञादिविभागमाह—

❁ परिमलः ❁

**परार्थानुमानमाहेति ।** परस्य = मध्यस्थस्य, अर्थः = प्रयोजनं—साध्यानुमितिर्यस्मादिति व्युत्पत्या मध्यस्थात्मसमवेतपरामर्शात्मकज्ञानमेव परार्थानुमानशब्दार्थः, न तु पञ्चावयववाक्यं, मूलकृताऽपि "स्वार्थानुमिति-परार्थानुमित्योर्लिङ्गपरामर्शः करणं, तदेव चाऽनुमान" मिति वक्ष्यते,—तथाऽपि तादृशलिङ्गपरामर्शात्मकपरार्थानुमानप्रयोजके पञ्चावयववाक्ये'परा-र्थानुमान'शब्दप्रयोगोऽत्रौपचारिकः, तथा च परार्थानुमानमाह = पञ्चावयव-वाक्यं–परार्थानुमानमाहे'त्यर्थो बोध्यः । परप्रतिपत्त्यर्थं = मध्यस्थानुमित्यर्थं, वादिप्रयुक्तन्यायजन्यशाब्दबोधेन हि मध्यस्थस्य परामर्शरूपानुमानं भवति । प्रयुज्यते = प्रयुङ्क्ते, [ यद्वा–स्वयम् = अनुमात्रैवेति सम्बन्धः, अनुमात्रा प्रयुज्यत इत्यर्थः । ] पञ्चावयववाक्यं = न्यायं, प्रतिज्ञादिपञ्चक-समुदायत्वं हि न्यायत्वम् । अनेन = प्रतिज्ञादिपञ्चकसमुदायप्रयोज्यलिङ्ग-परामर्शेन, अयं = पर्वतः, तथा = वह्निव्याप्यधूमवान्, तस्मात् = वह्नि-व्याप्यधूमवत्त्वात्, तथा = वह्निमान् । न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्य-तमत्त्वमवयवत्वम् । उदाहृतवाक्येषु = 'यथे'त्यारभ्य 'तस्मात्तथे'त्यन्तपञ्च-

पञ्चावयवाः । 'पर्वतोऽग्निमा'निति प्रतिज्ञा । 'धूमवत्त्वा'दिति हेतुः । 'यो यो धूमवान्स सोऽग्निमान् , यथा महानसम्' इत्युदाहरणम् । 'तथा चाय'मित्युपनयः । 'तस्मात्तथे'ति निगमनम् ॥ ४४ ॥

❀ दीपिका ❀

पर्वतो वह्निमानिति । साध्यवत्तया पक्षवचनं—प्रतिज्ञा । पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं—हेतुः । व्याप्तिप्रतिपादकं वचनमुदाहरणम् । व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनमुपनयः । हेतुसाध्यवत्तया पक्ष-

❀ परिमलः ❀

वाक्येषु । साध्यवत्तयेति । साध्यतावच्छेदकावच्छिन्नवह्न्यादिसाध्यप्रकारकपक्षतावच्छेदकावच्छिन्नपर्वतादिपक्षविशेष्यताशालिबोधजनकत्वे सति, प्रकृतन्यायावयववाक्यत्वं प्रतिज्ञात्वमित्यर्थः । 'यो यो धूमवा'नित्याद्युदाहरणाच्च साध्यतावच्छेदकविशिष्टज्ञानं न पक्षतावच्छेदकावच्छिन्ने, 'तथा चाय'मित्युपनयाच्च—पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति तयोर्व्युदास इति—शिरोमणिभट्टाचार्याः । पञ्चम्यन्तमिति । पञ्चम्यन्तत्वे सति हेतुप्रतिपादकवाक्यत्वं हेतुत्वमित्यर्थः। व्याप्तीति। प्रकृतहेतुमति प्रकृतहेतुव्यापकत्वविशिष्टसाध्य—बोधकवाक्यत्वम्—उदाहरणत्वमित्यर्थः । 'यो य' इत्याद्युदाहरणवाक्ये 'यो य' इत्यादिपदानां 'वह्नेर्धूमव्यापकवह्नौ लक्षणे'त्येवं तात्पर्यग्राहकतया 'धूमवान् धूमव्यापकवह्निमा'निति बोधाल्लक्षणसमन्वयः ।

व्याप्तिविशिष्टेति । पक्षतावच्छेदकविशिष्टपर्वतविशेष्यक-प्रकृतसाध्यव्याप्तिविशिष्ट हेतु-प्रकारकबोधजनकत्वमुपनयवाक्यत्वमित्यर्थः । तच्च—'वह्निव्याप्यधूमवान्पर्वत'इत्यर्थक'तथाचाय'मित्याकारकोपनयवाक्येऽक्षतम् । हेतुसाध्यवत्तयेति । हेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवत्पक्षविषयकबोधजनक-

❀ दीपिका ❀

प्रतिपादकं वचनं—निगमनम् । पक्षज्ञानं प्रतिज्ञाप्रयोजनम् , लिङ्गज्ञानं हेतुप्रयोजनम् , व्याप्तिज्ञानमुदाहरणप्रयोजनम् , पक्षधर्मज्ञानमुपनयप्रयोजनम् , अबाधितत्वादिकं—निगमनप्रयोजनम् ।

❀ परिमलः ❀

वाक्यं निगमनमित्यर्थः । 'तस्मात्तथे'ति निगमनवाक्यस्य वह्निव्याप्यधूमवत्त्वाद्वह्निमानित्यर्थकतया लक्षणसमन्वयः ।

पक्षज्ञानं = पर्वतादिप्रकृतपक्षज्ञानं, लिङ्गज्ञानं = हेतुज्ञानं, हेतुप्रयोजनं = हेतुवाक्यप्रयोजनं, व्याप्तिज्ञानं = वह्निनिरूपितधूमनिष्ठव्याप्त्यादिज्ञानं, 'धूमवान् धूमव्यापकवह्निमा'नित्येवोदाहरणवाक्याद् बोधादिति भावः। पक्षधर्मज्ञानं = पक्षवृत्तित्वेन हेतोर्ज्ञानं, 'वह्निव्याप्यधूमवान्पर्वत' इत्याकारकोपनयजन्यवाक्यार्थबोधाद् व्याप्तिविशिष्टत्वेन हेतोर्धूमस्य पर्वतवृत्तित्वनिश्चयात् । **अबाधितत्वादीति** । बाधितत्व—असत्प्रतिपक्षितत्व—पक्षसत्त्व—सपक्षसत्त्व—विपक्षासत्त्वादिपञ्चरूपोपपन्नत्वस्य हेतौ ज्ञानमित्यर्थः ।

[मूले—**तस्मादिति** । अनुमितिकरणत्वादित्यर्थः । अनुमितिकरणं हि अनुमानमिति भावः ।]

ननु व्याप्तिस्मृति-पक्षधर्मताज्ञानाभ्यां—'वह्निव्याप्यो धूमः', 'धूमवान्पर्वत'इत्याकारकाभ्यामेवानुमितिर्भवतु, परामर्शस्य कारणत्वकल्पनं व्यर्थं, विशिष्टवैशिष्ट्यावगाहिनः—'वह्निव्याप्यधूमवान्पर्वत'इत्याकारकस्य परामर्शस्यानुमितिं प्रति हेतुत्वेऽनन्यथासिद्धत्व—नियतपूर्ववृत्तित्वयोस्तत्र कल्पनीयतया गौरवात्,[1] 'धूमवान्पर्वतः' 'वह्निव्याप्यो धूमः' इत्याकारकपक्ष-

१ विशिष्टवैशिष्ट्यज्ञानस्य ज्ञानविशिष्टज्ञानान्तरस्वरूपतया पूर्वोक्तज्ञानद्वयस्य कारणत्वकल्पनमुभयवादिसम्मतं, तथा च नियतपूर्ववृत्तित्वस्य सिद्धतया तत्रानन्यथासिद्धत्वमात्रं ज्ञानद्वयकारणत्ववादिनये नवीनं कल्पनीयं, 'ज्ञानद्वयजन्यविशिष्टपरामर्शस्य कारणत्व'मिति मते तु—परामर्शे नियतपूर्ववृत्तित्वरूपं कारणत्वमनन्यथासिद्धत्वञ्चेत्युभयं कल्पनीयमिति गौरवं स्पष्टमेव ।

**स्वार्थानुमिति-परार्थानुमित्योर्लिङ्गपरामर्श एव करणम्, तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥ ४५ ॥**

❀ दीपिका ❀

अनुमितिकरणमाह—स्वार्थेति। ननु व्याप्तिस्मृति-पक्षधर्मताज्ञानाभ्यामेव अनुमितिसम्भवे विशिष्टपरामर्शः किमर्थमङ्गीकर्तव्य इति चेन्न, 'वह्निव्याप्यधूमवानयम्' इति शाब्दपरामर्शस्यावश्यकतया

❀ परिमलः ❀

धर्मताज्ञान—व्याप्तिस्मरणयोः परामर्शं प्रति कारणतायास्तवापि मते क्लृप्ततया तत्रानन्यथासिद्धत्वमात्रस्य कल्पनीयतया लाघवादिति मीमांसकः शङ्कते—**नन्विति** । समाधत्ते—**वह्निव्याप्येति** ।

'वह्निव्याप्यधूमवानय'मितिशब्दजन्योपस्थितिविपयीभूतविशिष्टवैशिष्ट्यावगाहिज्ञानात्मकपरामर्शस्थले— 'धूमवान्पर्वतः'वह्निव्याप्यो धूम'इति ज्ञानद्वयस्यानुमितिकारणतया त्वदभिमतस्य—विरहेण तत्र व्यभिचारात्कारणत्वस्याकल्पनाद्विशिष्टवैशिष्ट्यावगाहिपरामर्शस्यैव कारणत्वकल्पनं युक्तमित्याशयः । परामर्शस्यावश्यकतया = उक्तज्ञानद्वयविरहात्परामर्श एवानुमितिकारणतायाः कल्पनीतया, लाघवेन = एकस्य कारणस्यैव सर्वत्र कल्पनात्कल्पनालाघवेन,[1] सर्वत्र = ज्ञानद्वयविकलशाब्दस्थल इव—'वह्निव्याप्यो धूमः'—'धूमवान्पर्वत'इति ज्ञानद्वयशालिस्थलेऽपि, परामर्शस्य = उक्तज्ञानद्वयजन्यस्य,—विशिष्टवैशिष्ट्यावगाहिनो,—'वह्निव्याप्तिविशिष्टधूम—विशिष्टः पर्वत'इत्याकारकपरामर्शस्य ।

---

१ धूमत्वावच्छिन्नविशेष्यकव्याप्तिप्रकारक—[—'वह्निव्याप्यो धूम'इत्याकारक—] निश्चयविशिष्ट—धूमत्वावच्छिन्नधूमप्रकारकपक्षतावच्छेदकावच्छिन्नपक्ष—( पर्वत )—विशेष्यक—[—धूमवान्पर्वत'इत्याकारक—] निश्चयत्वस्य कारणतावच्छेदकत्वकल्पनमपेक्ष्य व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वस्य कारणतावच्छेदकत्वकल्पने लाघवमिति —नीलकण्ठभट्टाः ।

❀ दीपिका ❀

लाघवेन सर्वत्र परामर्शस्यैव कारणत्वात् । लिङ्गं न करणम्, अतीतानागतादौ व्यभिचारात् । 'व्यापारवत्कारणं करणम्' इति मते परामर्शद्वारा व्याप्तिज्ञानं करणम् । तज्जन्यत्वे सति तज्जन्यजनको व्यापारः । अनुमानमुपसंहरति—तस्मादिति ।

❀ परिमलः ❀

ननु 'लिङ्गपरामर्श एव करण'मिति कथमुच्यते, लिङ्गपरामर्शस्य विशिष्टस्य करणताग्रहे विशेषणस्यापि करणताग्रहात्, लिङ्गपरामर्शस्येव विनिगमनाविरहेण ज्ञायमानलिङ्गस्यापि हेतुत्वे (—व्यापाराभावात्परामर्शस्य-करणत्वासम्भवात्— ) लिङ्गस्यैव करणत्वौचित्यादित्याशङ्क्य समाधत्ते—लिङ्गमिति । लिङ्गं = हेतुः, 'किन्तु लिङ्गज्ञानमेव करण'मिति शेषः । अतीतेति । 'इयं यज्ञशाला वह्निमती, अतीतधूमा'दित्यादावतीतधूमादिहेतुकानुमितेरनुभवसिद्धतया तत्र च तादृशानुमितिकार्याव्यवहितप्राक्क्षणावच्छेदेनातीतहेतोरभावेन व्यभिचाराद्धेतुमात्रस्य करणत्वविरहात्, अतो लिङ्गपरामर्श एव करणमित्याशयः । न च लिङ्गपरामर्शस्य व्यापारवत्कारणत्वाभावात्कथं करणतेति वाच्यं, 'फलायोगव्यवच्छिन्नं[१] कारणं करण'मिति मते परामर्शस्य करणत्वसम्भवात् ।

'व्यापारवत्कारणं करण'मिति मते त्वाह—व्याप्तिज्ञानं करणमिति । व्याप्तिज्ञानं करणं, तस्य परामर्शो व्यापारः, व्यापारवत्कारणमेव हि करणं, परामर्शस्य व्यापारत्वञ्च—'व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमितिजनकत्वा'दिति सकलग्रन्थाशयः ।

**तज्जन्यत्वे सतीति** । अत्र सत्यन्तानुपादाने व्याप्तिज्ञानेऽनुमिति-

---

१ फलेन = अनुमित्या, अयोगः = असम्बन्धः, तेन व्यवच्छिन्नं = अयुक्तं, स्वाव्यवहितोत्तरानुमितिफलजनकमिति यावत्, साक्षात्फलजनकं कारणं करणमिति तु निर्गलितोऽर्थः ।

लिङ्गं त्रिविधम्,–अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति। अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वय-

❀ न्यायबोधिनी ❀

अन्वयेनेति। [1]व्यापकसामानाधिकरण्यरूपव्याप्तिमानित्यर्थः। व्यतिरेकेणेति। व्यतिरेको नामाभावः। तथा च साध्याभावहेत्वभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः, इयं च व्याप्तिर्यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव इति, 'यत्र'पदवीप्सया वह्न्यभाववति [2]यावति धूमाभावग्रहणे यावत्पदस्य व्यापकत्वपरतया धूमाभावे वह्न्यभावव्यापकत्वं लभ्यते। एवं च वह्न्यभावनिष्ठव्याप्तेः [3]स्वाश्रयीभूतवह्न्यभावव्यापकीभूताभावप्रतियोगित्वसम्बन्धेन

❀ दीपिका ❀

लिङ्गं विभजते—**लिङ्गमिति**। अन्वयव्यतिरेकि लक्षयति—अन्वयेनेति।—

❀ परिमलः ❀

करणेऽपि स्वजन्यानुमितिजनकत्वादतिव्याप्तिः, अतः सत्यन्तम्, एवञ्च—स्वस्मिन् स्वजन्यत्वाभावान्न दोषः। तत्पदेनोभयत्रापि व्याप्तिज्ञानं ग्राह्यम्।

यद्यप्यनुमाननिरूपणप्रस्तावेऽनुमानस्यैव विभाग उचितस्तथापि लिङ्गस्य त्रैविध्ये लिङ्गज्ञानस्यैव त्रैविध्यं फलति,–( लिङ्गज्ञानमेव चानुमितिकरणं सदनुमानमित्युच्यते )–इति विभाव्य लिङ्गं विभजते—**लिङ्गमिति**। **अन्वयेनेति**। अन्वयसहचारग्रहग्राह्यव्याप्तिमत्त्वे सति, व्यतिरेकग्रहचार-

---

१. व्यापकेति। हेतुव्यापकसाध्यसामानाधिकरण्येत्यर्थः। २. यावतीति। 'यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव' इति रीत्या धूमाभावे वह्न्यभावनिष्ठव्याप्यतानिरूपितव्यापकत्वं लब्धमित्याशयः। ३. स्वाश्रयीति। स्वं = वह्न्यभावनिष्ठा व्याप्तिः, स्वाश्रयीभूतो यो वह्न्यभावः, तद्व्यापकीभूतो यो धूमाभावः, तत्प्रतियोगित्वं धूम इति–धूमे व्यतिरेकव्याप्तिरस्ति, गीयत इति। तथा च 'वह्निमान्धूमा'दित्यत्र धूमहेतोरन्वयव्यतिरेकित्वमुपपन्नमिति भावः।

व्यतिरेकि,-यथा वह्नौ साध्ये धूमवत्त्वम्। 'यत्र धूमस्तत्राग्नि'रिति —अन्वयव्याप्तिः। 'यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति,यथा

❁ न्यायबोधिनी ❁

धूमनिष्ठतया व्यतिरेकव्याप्तिमत्त्वेन धूमव्यापकवह्निसामानाधिकरण्यरूपान्वय-व्याप्तिमत्त्वेन चान्वयव्यतिरेकित्वेन गीयते। व्यतिरेकपरामर्शस्तु—'वह्न्य-भावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वत' इत्याकारकः।

❁ दीपिका ❁

हेतुसाध्ययोर्व्याप्तिरन्वयव्याप्तिः, तदभावयोर्व्याप्तिर्व्यतिरेकव्याप्तिः।

❁ परिमलः ❁

ग्रहग्राह्यव्याप्तिमत्त्वम् अन्वयव्यतिरेकित्वमित्यर्थः। 'यत्सत्त्वे यत्सत्त्व'मन्वय-सहचारः, 'यदभावे यदभावो'व्यतिरेकसहचारः। अन्वय-व्यतिरेक-सहचारग्राह्यव्याप्ती प्रदर्शयति—हेत्विति। तथा च हेत्वधिकरणवृत्त्यत्य-न्ताभावाऽप्रतियोगिसाध्याधिकरणवृत्तित्वमन्वयव्याप्तिमत्त्वं, यथा—'वह्नि-मान्धूमा'दित्यत्र,—धूमाधिकरणमहानसवृत्त्यन्ताभावो न वह्न्यभावः, किन्तु घटाभावस्तदप्रतियोगी वह्निः तदधिकरण-महानस-वृत्तित्वं धूम इति,—धूमेऽन्वयव्याप्तिमत्त्वम्।

व्यतिरेकव्याप्तिमत्त्वञ्च— साध्याभावाधिकरणवृत्त्यत्यन्ताभावाऽप्रतियो-ग्यभावप्रतियोगित्वं, यथा 'वह्निमान्धूमा'दित्यत्र,—साध्याभावो—वह्न्य-भावस्तदधिकरण—ह्रद—वृत्त्यत्यन्ताभावो धूमाभावः, तत्प्रयोगी—धूमः,—अप्रतियोगी धूमाभावः[1] तत्प्रतियोगित्वं धूम इति—तत्र व्यतिरेकव्याप्तिः। तदित्थं 'वह्निमान्धूमा' दित्यत्रान्वयव्यतिरेकसहचारग्रहग्राह्यव्याप्तिमत्त्वाद्धूम-हेतोरन्वयव्यतिरेकित्वमिति तत्त्वम्।

तदभावयोः = साध्याभाव—हेत्वभावयोः, इदमत्र हृदयम्—अन्वय-

१ यदि ह्रदे धूमाभावाभावस्तिष्ठेत्तदा धूमाभावस्तादृशाभावप्रतियोगी स्यादपि, न चैवं तथा, धूमाभावाभावस्य धूमस्वरूपस्य ह्रदेऽवर्त्तमानत्वात्।

महाह्रद' इति व्यतिरेकव्याप्तिः। अन्वयमात्रव्याप्तिकं केवला-

❀ न्यायबोधिनी ❀

केवलान्वयिनो लक्षणमाह—**अन्वयेति।** व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम्, अथवा 'केवलान्वयिसाध्यकत्वं' तत्। एतच्च लक्षणं हेतोर्व्यतिरेकित्वेऽपि सङ्गच्छते। साध्यस्य केवलान्वयित्वादेव व्यतिरेकव्याप्तेरभावा'दन्वयमात्रव्याप्तिकं केवलान्वयी'ति मूलकारोक्तं लक्षण-

❀ दीपिका ❀

केवलान्वयिनो लक्षणमाह—अन्वयेति। केवलान्वयिसाध्यकं

❀ परिमलः ❀

व्याप्तौ,—साध्यं व्यापकं, हेतुर्व्याप्यः, व्यतिरेकव्याप्तौ तु ततो वैपरीत्यं—साध्याभावो व्याप्यः, हेत्वभावो व्यापक इति। तदुक्तं—

"व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते॥"
"अन्वये साधनं व्याप्यं, साध्यं व्यापकमिष्यते।
साध्याभावोऽन्यथा व्याप्यो, व्यापकः साधनात्ययः॥" इति।

[ अन्यथा = व्यतिरेकव्याप्तौ, साधनात्ययः = हेत्वभावः,—इति तदर्थः। ]

मूले—धूमवत्त्वं = धूमः, 'केवलान्वयिन' इत्यस्य—'हेतो'रिति शेषः।

'अन्वयमात्रव्याप्तिकत्व'मित्यस्य—व्यतिरेकव्याप्तिशून्यत्वे सति गृहीतान्वयव्याप्तिकत्वमित्यर्थे अगृहीतान्वयव्याप्तिके 'वाच्यं ज्ञेयत्वा'दित्यादौ केवलान्वयिन्यव्याप्तिः, अन्वयसहचाराग्रहदशायामपि तत्र केवलान्वयित्वस्येष्टत्वात्, मूलोक्तलक्षणे तु—गृहीतान्वयव्याप्तिकत्वविरहादव्याप्तिरतो मूलोक्तलक्षणमन्यथा व्याचष्टे—**केवलान्वयीति।** 'वाच्यं घटत्वा'दित्यादौ केवलान्वयिसाध्यके व्यतिरेकिणि घटत्वहेतावव्याप्तिरतः—साध्ये केवलान्वयित्वं निवेशितम्।

न्वयि । यथा 'घटोऽभिधेयः प्रमेयत्वात् पटवत्', अत्र प्रमेय-

❀ न्यायबोधिनी ❀

मुपपन्नम् । अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् । न चात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वमाकाशाभावे[1],संयोगाभावे चाव्याप्तमिति वाच्यं, [2]स्वविरोधि-वृत्तिमद्-त्यन्ताभावाप्रतियोगित्वस्यैव तदर्थत्वात् । 'एकजातीय[3]-सम्बन्धेन सर्वत्र विद्यमानत्वं केवलान्वयित्व'मिति-नव्याः ।

❀ दीपिका ❀

लिङ्गं—केवलान्वयि । अत्यन्ताभावाप्रतियोगित्वं—केवलान्वयित्वम् । केवलान्वयिनमुदाहरति—'घटोऽभिधेयः प्रमेयत्वा'दिति । ईश्वरप्रमा-

❀ परिमलः ❀

अत्यन्ताभावेति । 'घटोऽभिधेयः प्रमेयत्वा'दित्यादौ—'सर्व'पदाभिधेयत्वस्य सर्वत्र सत्त्वेनाभिधेयत्वाभावाऽप्रसिद्धया [ घटाद्यत्यन्ताभावप्रतियोगित्वं घटादौ, तदप्रतियोगित्वमभिधेयत्वादाविति—] अभिधेयत्वादेः केवलान्वयित्वम् । केवलान्वयि साध्यं यस्य तत्—केवलान्वयिसाध्यकं—लिङ्गमिति विग्रहेण—साध्यस्याभिधेयत्वादेः केवलान्वयित्वमात्रेण हेतोः केवलान्वयित्वसूचनाच्च—'वाच्यं घटत्वा'दित्यादौ हेतोर्घटत्वादेर्व्यतिरेकप्रतियोगित्वेऽपि केवलान्वयित्वव्यवहारो भवतीति सर्वं समञ्जसम् । असर्वज्ञयत्किञ्चित्पुरुषीयप्रमाविषयत्वस्य सकलघट-पटादावसम्भवात्केवलान्वयित्वाऽप्रसक्त्या—'ईश्वरप्रमाविषयत्वं—प्रमेयत्व'मिति स्वीकार्यं, तदुक्तम्—ईश्वर-

---

१. आकाशाभाव इति । आकाशाभावे केवलान्वयित्वमिष्टं, परन्तु आकाशाभावाभावप्रतियोगित्वस्याकाशाभावे सत्त्वात्प्रकृतलक्षणं तत्राव्याप्तम्, एवं संयोगाभावेऽपि संयोगाभावाभावात्मकात्यन्ताभावप्रतियोगित्वात्केवलान्वयित्वं न स्यादिति शङ्कितुराशयः ।

२ स्वविरोधीति । स्वविरोधी, वृत्तिमांश्च योऽत्यन्ताभावस्तत्प्रतियोगिभिन्नत्वमित्यर्थः । तथा च प्रतियोगिव्यधिकरणो वृत्तिमांश्चाभावो विवक्षितः, एवञ्च नोक्तस्थलद्वयेऽव्याप्तिः, संयोगाभावाभावात्मकात्यन्ताभावस्य संयोगाभावात्मकस्वविरोधित्वाभावात्, आकाशाभावाभावात्मकात्यन्ताभावस्य चाकाशाभावविरोधितया प्रतियोगिव्यधिकरणत्वेऽपि तस्य वृत्तिमत्त्वाभावात्, गगनस्य क्वाप्यवर्त्तमानत्वात् । ३ एकजातीयेति । स्वरूपेणेत्यर्थः ।

त्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यैव प्रमेयत्वादभिधेयत्वाच्च । व्यतिरेकमात्रव्याप्तिकं—केवलव्यतिरेकि, यथा 'पृथिवीतरेभ्यो भिद्यते, गन्धवत्त्वात् , यदितरेभ्यो न

❀ न्यायबोधिनी ❀

केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । निश्चितान्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्वम् । **यथा पृथिवीति ।** अत्र पृथिवीत्वावच्छिन्नं पक्षः, पृथिवीतरजलाद्यष्टभेदः साध्यम्, गन्धवत्त्वं हेतुः । अत्र 'यद्गन्धवत्तदितरभेदव'दित्यन्वयदृष्टान्ताभावाद्गन्धव्यापकेतरभेदसामानाधिकरण्यरूपान्वयव्याप्तिग्रहासम्भवात्, किन्तु 'यत्र यत्र पृथिवीतरभेदाभावस्तत्र तत्र गन्धाभावो यथा जलादिक'मिति व्यतिरेकदृष्टान्ते जलादावितरभेदाभावरूपसाध्यभावव्यापकता गन्धाभावे गृह्यते । इममेवार्थं मनसि निधाय 'यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा जल'मिति ग्रन्थेन मूलकारो व्यतिरेकव्याप्तिमेव प्रदर्शितवान् । एवम्प्रकारेण व्यतिरेकव्याप्तिग्रहानन्तर'मितरभेदाभावव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवी'त्याकारकव्यतिरेकिपरामर्शात्पृथिवीत्वावच्छिन्नोद्देश्यतानिरूपितेतरभेदत्वावच्छिन्नविधेयताका 'पृथिवी इतरभेदवती'त्याकारकानुमितिर्जायत इति तत्त्वम् ।

❀ दीपिका ❀

विषयत्वं सर्वपदाभिधेयत्वं च सर्वत्रास्तीति व्यतिरेकाभावः । केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । केवलव्यतिरेकिणमुदाहरति——पृथिवीति ।

❀ परिमलः ❀

—प्रमाविषयत्वमिति । व्यतिरेकाभावः = प्रमेयत्वाभिधेयत्वाद्यत्यन्ताभावाप्रसिद्धिः ।

[मूले—व्यतिरेकमात्रेति । केवलव्यतिरेकः = व्यतिरेकव्याप्तिमात्रम्,

**भिद्यते न तद्गन्धवत्, यथा जलम्, न चेयं तथा। तस्मात् न तथे'ति। अत्र 'यद्गन्धवत् तदितरभिन्न'मित्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात्॥ ४६॥**

❀ न्यायबोधिनी ❀

यथाश्रुतमूलार्थस्तु—**यथाजलमिति**। यत् जलं—इतरेभ्यो न भिद्यते = इतरभेदाभाववत्, न तद्गन्धवत्—जलमितरभेदाभावव्यापकगन्धाभाववत्,— इत्येवम्प्रकारेण गन्धाभावनिरूपिता व्याप्यता इतरभेदाभावे गृह्यत इत्यर्थः। **न चेयं तथेति**। इयं पृथिवी, न तथा=इतरभेदाभावव्यापकगन्धाभाववती न, किन्तु तदभावात्मकगन्धवती। **तस्मान्न तथेति**। तस्मात्—गन्धाभावाभाववत्त्वात्। तच्छब्देन गन्धाभावाभावरूपस्य गन्धस्य परामर्शेन तस्मादिति पञ्चम्यन्तात् गन्धाभावाभाववत्त्वादित्यर्थोपलब्धिः। न तथा—इतरभेदाभाववती न, किन्तु इतरभेदाभावाभाववती, इतरभेदवतीत्यर्थः॥ ४६॥

❀ परिमलः ❀

यस्य हतोः, तत्—केवलव्यतिरेकि। 'अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकित्व'मिति यावत्। उदाहरणे—'गन्धवत्त्व'हेतुना पृथिवीतर-जलादिभेदः पृथिव्यां साध्यते, तत्र च हेतौ व्यतिरेकव्याप्तिरेव, तथा हि,—साध्याभावः—पृथिवीतरभेदाभावः, तदधिकरणं जलादिकं, तद्वृत्तिरत्यन्ताभावो गन्धाभावः, तदप्रतियोग्यभावः—गन्धाभावः, तत्प्रतियोगित्वं गन्धे—इति रीत्या—'साध्याभाववन्निष्ठात्यन्ताभावाप्रतियोग्यभावप्रतियोगित्व'रूपव्यतिरेकव्याप्तिलक्षणसमन्वयात्। अन्वयव्याप्तिशून्यत्वञ्च—निश्चितान्वयव्याप्तिरहितत्वम्, तेन—गन्धवत्त्वरूप-हेत्वधिकरण-पृथिवी-वृत्तिघटाद्यभावाप्रतियोगि—पृथिवीतरभेदात्मकसाध्या-ऽधिकरण—पृथिवी-वृत्तित्वस्य हेतौ गन्धवत्त्वेन—'हेत्वधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगिसाध्याधिकरणवृत्तित्व'रूपान्वयव्याप्तेर्गन्धे सत्त्वेऽपि न दोपः, पृथिवीमात्रस्य पक्षतया सन्दिग्धसाध्यवत्त्वात्, पृथिवीतरजलादौ गन्धाभावाच्च,—'यत्र

❀ दीपिका ❀

**नन्वितरभेदः प्रसिद्धो न वा ? । आद्ये—यत्र प्रसिद्धस्तत्र हेतुसत्त्वे —अन्वयित्वम् । असत्त्वे—असाधारण्यम् । द्वितीये साध्यज्ञानाभावात् कथं तद्विशिष्टानुमितिः, विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात् ,**

❀ परिमलः ❀

गन्धस्तत्र पृथिवीतरभेद' इत्यन्वयदृष्टान्तस्यासम्भवेन निश्चितान्वयव्याप्तेर-भावात् , यत् = जलादिकम् , इतरेभ्यः = जलादिभ्यः, न भिद्यते=इतरभेदा-भाववत्, न गन्धवत् = गन्धाभाववत्, पृथिवी च गन्धाभाववती न, तस्मात् = गन्धशून्यत्वाभावात् , न तथा = इतरभेदाभाववती न, किन्तु— पृथिवीतरजलादिभेदशालिन्येवेति—सकलमूलाशयः । ]

हेतोः केवलव्यतिरेकित्वं कथमिति शङ्कते—**नन्विति** । इतरभेदः = पृथिवीतरभेदः,—साध्यम् , आद्ये=इतरभेदात्मकसाध्यस्य प्रसिद्धौ, तत्र = इतरभेदाधिकरणे, हेतुसत्त्वे = गन्धवत्त्व—( गन्ध )—सत्त्वे, **अन्वयित्व-मिति** । 'अन्वयव्याप्ति'पदेन हेतु-साध्ययोः सामानाधिकरण्यरूपान्वयसह-चारग्रहग्राह्यव्याप्तेर्विवक्षणान्निश्चितसाध्याधिकरणे हेतोः सत्त्वेऽन्वयसहचार-स्यापि सम्भवादन्वयित्वापत्तिः स्यादेवञ्चास्यान्वयव्यतिरेकित्वमेव युक्त, न केवलव्यतिरेकित्वमिति भावः । असत्त्वे = निश्चितसाध्याधिकरणे हेतोर्गन्ध-वत्त्वस्यासत्त्वाभ्युपगमे, **असाधारण्यमिति** । 'स्या'दिति शेषः । सपक्ष—विपक्षव्यावृत्तौ हि हेतुरसाधारणः, निश्चितसाध्यवांश्च सपक्षः, तत्रापि यदि हेतुर्न स्यात्तदा हेतोरसाधारण्यापत्तिः, 'यस्तूभयस्माद्व्यावृत्तः सत्वसाधारणो मत'इत्युक्तेरित्याशयः । एवञ्च कथमस्य हेतोः केवलव्यतिरेकित्वमिति च गूढ आशयः । द्वितीये = इतरभेदात्मकसाध्यस्य कुत्राप्यप्रसिद्धौ, साध्य-ज्ञानाभावात् = इतरभेदज्ञानाभावात् , तद्विशिष्टानुमितिः = 'पृथिवीतरेभ्यो भिद्यते' इत्येवं रीत्या इतरभेदसाध्यविशेषणकानुमितिः । साध्यविशिष्टानु-मित्यसम्भवे हेतुमाह—**विशेषणेति** । विशेषणम् = इतरभेदात्मकं साध्यम् ,

❀ दीपिका ❀

प्रतियोगिज्ञानाभावाद्व्यतिरेकव्याप्तिज्ञानमपि न स्यादिति चेन्न, जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेलनं.

❀ परिमलः ❀

विशिष्टज्ञानं='पृथिवी इतरभेदवती'ति साध्यविशिष्टपक्षविशेष्यकानुमितिः। इतरभेदरूपसाध्याऽप्रसिद्ध्या साध्यविशेषणविशिष्टानुमितिर्न सम्भवति, विशेषणज्ञानं विना विशिष्टबुद्धेरनुदयादिति भावः।

दूषणान्तरमाह–**प्रतियोगीति**। प्रतियोगिज्ञानाभावात् साध्याभावप्रतियोगि-साध्यज्ञानाभावात्, व्यतिरेकव्याप्तिज्ञानं = 'साध्याभावव्यापकीभूताभावप्रतियोगित्व'रूप-व्यतिरेकव्याप्ति-ज्ञानं, न स्यादिति। अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्प्रतियोगिनः–(इतरभेदात्मकस्य)—साध्यस्याऽज्ञाने इतरभेदाभावरूपसाध्याभावस्यापि ज्ञानासम्भवाद्व्यतिरेकव्याप्तिज्ञानस्य दूरापास्तत्वात्, व्यतिरेकव्याप्तिज्ञानजनकस्येतरभेदाभावज्ञानस्यैवाभावादित्याशयः। समाधत्ते—**जलादीति**। पृथिवीं विहाय जलादीन्यष्टौ द्रव्याणि, गुणाः, कर्म-सामान्य-विशेषाः, समवायश्चेति पञ्च पदार्थाः—मिलित्वा–त्रयोदश, अभावस्तु न सर्ववादिसम्मतः पृथक्पदार्थः, प्रभाकरेणाधिकरणातिरिक्तस्याभावस्यानङ्गीकरादिति न तद्भेदः पृथिव्यां साध्यत इति भावः। मेलनं = कूटं, समुदाय इति यावत्, अयम्भावः–जलभेदस्य तेजसि प्रसिद्धिः, तेजोभेदस्य जले प्रसिद्धिः, वाय्वादिभेदस्य जलादौ प्रसिद्धिरिति रीत्या चालनीन्यायेन जलादित्रयोदशानां प्रत्येकं भेदस्याधिकरणानां प्रसिद्धिः, पृथिव्याञ्च तादृशत्रयोदशभेदसमुदायः साध्यते—'पृथिवी–पृथिवीतरभिन्ना, गन्धवत्त्वा'दिति। इत्थञ्चाभावानां प्रत्येकमधिकरणप्रसिद्धिसम्भवात्साध्यविशिष्टानुमितौ न बाधकं, व्यतिरेकव्याप्तिज्ञानमपि सुतरां सम्पद्यते; तादृशभेदकूटस्य च पक्षभूत-पृथिवी-व्यतिरिक्तेऽप्रसिद्धेरन्वयदृष्टान्ताभावान्नान्वयित्वसम्भवः, निश्चितसाध्यवद्व्यावृत्तत्वाभावाच्च नासाधारण्यशङ्कापीति–सकल-

❀ दीपिका ❀

पृथिव्यां साध्यते, त्रयोदशत्वावच्छिन्नसाध्यस्यैकाधिकरणवृत्तित्वाभावान्नान्वयित्वासाधारण्ये। प्रत्येकाधिकरणप्रसिद्ध्या साध्यविशिष्टानुमितिः। साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति व्यतिरेकव्याप्तिनिरूपणं च—'यदितरे'ति।

पक्षलक्षणमाह——————————

❀ परिमलः ❀

ग्रन्थाशयः। **नान्वयित्वासाधारण्य इति।** एवञ्च पृथिवीतरत्वावच्छिन्नप्रतियोगिताकभेदो न पृथिव्यां साध्यते, येन समुदायभेदाधिकरणप्रसिद्ध्या तत्र हेतुसत्त्वासत्त्वाभ्यामन्वयित्वाऽसाधारण्ये हेतोः प्रसज्येयाताम्, अपि तु जलादिभेदकूटः पृथिव्यां साध्यते, तथा च नान्वयित्वम्, अनुमितेः पूर्वं निश्चित–साध्यतावच्छेदकेतरभेदत्वावच्छिन्नेतरभेदवतो धर्मिणोऽप्रसिद्ध्या तत्र हेतोरवृत्तेः, नाप्यसाधारण्यं—तादृशधर्मिण एवाऽप्रसिद्ध्या सपक्षव्यावृत्तत्वाभावात्, जलादित्रयोदशभेदानां प्रत्येकमधिकरणं प्रसिद्धमेवेति,—अपेक्षाबुद्धिविशेषविषयत्वरूपं च समुदायत्वमपि प्रसिद्धमेवेति नानुमित्यसम्भवः, विशेषणतावच्छेदक—साध्यत्व–प्रकारकनिर्णयसम्भवादिति—निर्गलितोऽर्थः।

**व्यतिरेकव्याप्तिनिरूपणमिति।** यज्जलमितरभेदाभाववत्, तद् गन्धाभाववत्, इयं पृथिवी न गन्धाभाववती—किन्तु' गन्धाभावाभाववती, तस्मात् = गन्धाभावाभावत्वात्, न तथा = इतरभेदाभावाभाववती, इतरभिन्नेति यावत्, इत्थं साध्याभाव(—इतरभेदाभाव—) व्यापकीभूताभाव(—गन्धवत्त्वाभाव—)प्रतियोगित्वस्य गन्धवत्त्वे सत्त्वाद्व्यतिरेकव्याप्तिः प्रदर्शितेत्याशयः।

**पक्ष इति।** सन्देहविषयीभूतसाध्याश्रयत्वं पक्षत्वमित्यर्थः। 'पर्वतो-वह्निमान्धूमा'दित्यत्र 'पर्वतो वह्निमान्न वे'ति सन्देहविषयसाध्याश्रयत्वस्य

**सन्दिग्धसाध्यवान् पक्षः, यथा धूमवत्त्वे हेतौ—पर्वतः ।**

❀ न्यायबोधिनी ❀

पक्षलक्षणमाह—**सन्दिग्धेति** । साध्यप्रकारकसन्देहविशेष्यत्वं पक्षत्वम्, सन्देहश्च 'पर्वतो वह्निमान्न वे'त्याकारकः, इदञ्च लक्षणम'नुमितेः पूर्वं साध्यसन्देहो नियमेन जायत' इत्यभिप्रायेण प्राचीनैः कृतम् । गगनविशेष्यकमेघप्रकारकसन्देहाभावदशायामपि गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन 'गगनं मेघव'दित्याकारिकाया गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताकाया अनुमितेर्दर्शनात्प्राचीनलक्षणं विहाय नवीनैरनुमित्युद्देश्यत्वं पक्षत्वमिति स्थिरीकृतम् ।

❀ दीपिका ❀

**—सन्दिग्धेति** । ननु श्रवणानन्तरभाविमननस्थलेऽव्याप्तिः, तत्र वेदवाक्यैरात्मनो निश्चितत्वेन सन्देहाभावात् । किञ्च प्रत्यक्षेऽपि वह्नौ यत्रेच्छयानुमितिस्तत्राव्याप्तिरिति चेन्न,—

❀ परिमलः ❀

पर्वते सत्त्वाल्लक्षणसमन्वयः । निश्चितसाध्याश्रयेऽपि पक्षव्यवहारादव्याप्तिमाशङ्कते—**नन्विति । श्रवणानन्तरेति** । 'आत्मा वाऽरे श्रोतव्यो मन्तव्यो निदिध्यासितव्य'इति श्रुतिबोधितात्मश्रवणानन्तरभाविन्यात्ममननस्थल इत्यर्थः । आत्ममननम् = आत्मानुमानम् । वेदवाक्यैः = 'यतो वा इमानि भूतानि जायन्ते' 'स ऐक्षत' 'सोऽकामयत' 'द्यावाभूमी जनयन्देव एक'-इत्यादिवाक्यैः । वेदवाक्येष्वपि चार्वाकादीनामनास्थया तेषां संशयलेशसम्भवात्स्थलान्तरे शङ्कते—**किञ्चेति** । प्रत्यक्षेऽपि = प्रत्यक्षेण वह्नेः पर्वतादौ निश्चयेऽपि, **इच्छयानुमितिरिति** । 'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका' इति चिन्तामण्युक्ते 'महानसं वह्निमद्धूमा'दित्यनुमितिर्भवति, तत्र महानसे पक्षलक्षणाव्याप्तिर्वह्नेः प्रत्यक्षतया साध्यसन्देहाभावा-

**निश्चितसाध्यवान् सपक्षः, यथा तत्रैव महानसम् । निश्चितसाध्याभाववान्, विपक्षः । यथा तत्रैव महाह्रदः ॥**

❀ न्यायबोधिनी ❀

सपक्षलक्षणमाह—**निश्चितेति**। साध्यप्रकारकनिश्चयविशेष्यत्वं सपक्षत्वम् । निश्चयश्च 'महानसं वह्निम'दित्याकारकः । विपक्षलक्षणमाह—**निश्चितसाध्याभावेति**। साध्याभावप्रकारकनिश्चयविशेष्यत्वं-विपक्षत्वम्। निश्चयश्च—'ह्रदो वह्न्यभाववा'नित्याकारकः ।

❀ दीपिका ❀

उक्तपक्षताश्रयत्वस्य पक्षलक्षणत्वात् । सपक्षलक्षणमाह-निश्चितेति । विपक्षलक्षणमाह—निश्चितेति ।

**एवं सद्धेतून् निरूप्य—असद्धेतून् निरूपयितुं विभजते—**

❀ परिमलः ❀

दित्याशयः । **उक्तेति**। सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूप-पक्षता-ऽऽश्रयत्वस्य पक्षलक्षणत्वमित्यर्थः । तच्चोक्तस्थलद्वयेऽपि निर्बाधम्, नातोऽव्याप्तिरिति तत्त्वम् ।

**सपक्षेति** । निश्चयविषयीभूतसाध्याश्रयत्वं सपक्षत्वं, साध्यनिष्ठ-प्रकारतानिरूपितनिश्चयमुख्यविशेष्यताश्रयत्वमिति यावत्, मूले—तत्रैव = धूमवत्त्वे हेतावेव, **विपक्षत्वमिति** । निश्चयविषयीभूतसाध्याभावाश्रयत्वं विपक्षत्वमित्यर्थः ।

**सद्धेतूनिति** । व्याप्तिपक्षधर्मताविशिष्टहेतून्निरूप्येत्यर्थः । एतेन सद्धेतुनिरूपिता प्रसङ्गसङ्गतिर्हेत्वाभासे सूचिता, तदुक्तमभियुक्तैः—'स्मृतस्योपेक्षानर्हत्वं प्रसङ्ग'इति । वस्तुतोऽत्रैककार्यकारित्वसङ्गतिरपि हेत्वाभासे वर्त्तते, सद्धेतुप्रयोज्य-तत्त्वनिर्णय-विजय-प्रयोजकताया हेत्वाभासे सत्त्वात् । **विभजत इति** । हेत्वाभासत्वावान्तर-सव्यभिचारत्वादि-धर्मेण धर्मिणः

**सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः। सव्यभिचारोऽनैकान्तिकः त्रिविधः-साधारणासाधारणानुपसंहारिभेदात्।**

❁ न्यायबोधिनी ❁

एवं सद्धेतून्निरूप्य हेत्वाभासान्निरूपयति—सव्यभिचारेति। हेतुवदाभासन्त इति हेत्वाभासाः—दुष्टहेतव इत्यर्थः। दोषाश्च व्यभिचारविरोधसत्प्रतिपक्षासिद्धिबाधाः। एकज्ञानविषयप्रकृतहेतुतावच्छेदकसम्बन्धेन एतद्विशिष्टा हेतवो दुष्टहेतव इत्यर्थः। यद्विषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वं तत्त्वं—दोषसामान्यस्य लक्षणम्। हेतौ दोषज्ञाने सत्यनुमितिप्रतिबन्धो जायते व्याप्तिज्ञानप्रतिबन्धो वा, अतो वादिनिग्रहाय वादिनोद्भाविते हेतौ दोषोद्भावनार्थं दुष्टहेतुनिरूपणमित्यर्थः।

❁ दीपिका ❁

—सव्यभिचारेति। अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वम्। सव्यभिचारं विभजते—स त्रिविध इति।

❁ परिमलः ❁

सव्यभिचारादेर्या प्रतिपत्तिस्तदनुकूलव्यापारानुकूलकृतिमान्मूलकार इत्यर्थः। 'हेतोराभासा हेत्वाभासा' इति व्युत्पत्त्या दोषलक्षणे कृते 'दोषवत्त्वं दुष्टत्व'मिति दुष्टलक्षणस्य स्फुटतया लाभसम्भवादादौ दोषलक्षणमाह—**अनुमितीति**। एतेन—दोषसामान्यलक्षणमनुक्तवतो मूलकारस्य विशेषविभागकरणे न्यूनत्वमित्याक्षेपोऽपि समाहितः। तथा च—अनाहार्याऽप्रामाणिकज्ञानानास्कन्दितयद्रूपावच्छिन्नविषयकनिश्चयवृत्तित्वविशिष्टविषयिताव्यापकं—'पक्षः साध्यवान्, साध्यव्याप्यहेतुमांश्चे'त्याकारकसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपित—प्रतिबन्धकत्वं,—तद्रूपवत्त्वं दोषत्वं, तद्वांश्च प्रकृतहेतुर्दुष्ट इति दोषघटित'दुष्ट'लक्षणं पर्यवसितम्। भवति हि

**तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः । यथा 'पर्वतोऽग्निमान् प्रमेयत्वा'दिति, प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात् । सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिर-**

❀ न्यायबोधिनी ❀

सव्यभिचारं विभज्य दर्शयति—**साधारणेति** । साधारणाद्यन्यतमत्वं सव्यभिचारसामान्यलक्षणम् । साधारणत्वं–साध्याभाववद्वृत्तित्वम् । 'वह्निमान् प्रमेयत्वा'दित्यत्र प्रमेयत्वहेतौ वह्न्यभाववद्वृत्तित्वरूपव्यभिचारे ज्ञाते वह्न्यभाववद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ।

❀ दीपिका ❀

साधारणं लक्षयति—**तत्रेति** । उदाहरति–**यथेति** । **असाधारणं**

❀ परिमलः ❀

'ह्रदो वह्निमान्धूमा'दित्यादौ वह्न्यभाववद्ध्रदो दोषः, तद्विषयकनिश्चयवृत्तिविषयिताव्यापकत्वस्य 'ह्रदो वह्निमान्, वह्निव्याप्यधूमवांश्चे'त्याकारकानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतायां सत्त्वात्, 'यथार्थ'पदन्तु निरुक्तार्थतात्पर्यग्राहकमेवेत्यवधेयम् ।

सूले—**साध्याभावेति** । साध्याभावाधिकरणनिरूपितवृत्तितावान् हेतुरनैकान्तिक इत्यर्थः । **प्रमेयत्वादितीति** । 'अत्र प्रमेयत्वं हेतुरनैकान्तिक' इति शेषः । **शब्दत्वमिति** । शब्दत्वरूपो हेतुरित्यर्थः । 'सर्वेभ्य' इत्यस्यैव व्याख्यानं—'नित्येभ्योऽनित्येभ्य' इति । **शब्दमात्रेति** । शब्दात्मकपक्षमात्रेत्यर्थः । **दृष्टान्त इति** । निश्चितसाध्यवत एव दृष्टान्ततया साध्यनिश्चयविरहे दृष्टान्ताभावः स्फुट एवेत्याशयः ।

**साध्याभावव्याप्त इति** । साध्याभावनिरूपितव्याप्तिमानित्यर्थः । **व्याप्तमिति** । यत्र यत्र कृतकत्वं तत्र तत्रानित्यत्वमितिव्याप्तिमदित्यर्थः ॥

साधारणः । यथा 'शब्दो नित्यः शब्दत्वा'दिति । शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यो व्यावृत्तं शब्दमात्रवृत्ति । अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । 'यथा सर्वमनित्यं प्रमेयत्वा'दिति । अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति ।

साध्याभावव्याप्तो हेतुर्विरुद्धः । 'यथा शब्दो नित्यः कृतकत्वा'दिति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् । यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः यथा 'शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्' —'शब्दोऽनित्यः कार्यत्वात्, घटव'दिति ।

❀ न्यायबोधिनी ❀

**असाधारण इति** । सर्वसपक्षव्यावृत्तत्वं निश्चितसाध्यवदवृत्तित्वम् । साध्यवदवृत्तित्वं च साध्यासामानाधिकरण्यम् । हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानप्रतिबन्धः फलम् ।

अनुपसंहारिणं लक्षयति—**अन्वयेति** । उभयत्र दृष्टान्ताभावादन्वयव्याप्तिज्ञानव्यतिरेकव्याप्तिज्ञानोभयसामग्री नास्तीत्यर्थः । सर्वस्यैव पक्षत्वात्पक्षातिरिक्ताप्रसिद्धेरिति भावः । [किञ्चिद्विशेष्यकनिश्चयाविषयकसाध्यकत्वे सति किञ्चिद्विशेष्यकनिश्चयाविषयकसाध्याभावकत्वमेवानुपसंहारित्वम् । एतदीयज्ञानस्य व्याप्तिसंशयजननद्वारा व्याप्तिज्ञानप्रतिबन्धः फलम् । वस्तुतस्तु अत्यन्ताभावाप्रतियोगिसाध्यादिकमेवानुपसंहारित्वमिति बोध्यम् ।]

विरुद्धं लक्षयति—**साध्याभावव्याप्त इति** । साध्याभावव्याप्तिः =

❀ दीपिका ❀

लक्षयति—**सर्वेति** । अनुपसंहारिणो लक्षणमाह—**अन्वयेति** ।

विरुद्धं लक्षयति—**साध्येति** । सत्प्रतिपक्षं लक्षयति—**यस्येति** ।

असिद्धस्त्रिविधः—आश्रयासिद्धः, स्वरूपासिद्धो, व्याप्यत्वासिद्धश्चेति। आश्रयासिद्धो यथा—'गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दव'दिति। अत्र गगनारविन्दमाश्रयः स च नास्त्येव। स्वरूपासिद्धो यथा—'शब्दोऽनित्यश्चाक्षुषत्वात् रूपव'दिति। अत्र चाक्षुषत्वं पक्षे नास्ति शब्दस्य श्रावणत्वात्।

सोपाधिको हेतुर्व्याप्यत्वासिद्धः। साध्यव्याप-

❀ न्यायबोधिनी ❀

साध्याभावनिरूपितव्यतिरेकव्याप्तिः—साध्यव्यापकीभूताभावप्रतियोगित्वम्। तथा च पक्षविशेष्यकसाध्याभावव्याप्यहेतुप्रकारकज्ञानात् पक्षविशेष्यक-साध्यप्रकारकानुमितिप्रतिबन्धः फलम्। एवं सत्प्रतिपक्षेऽपि। विरुद्धसत्प्रति-पक्षयोर्विशेषस्तु विरुद्धहेतोरेकत्वेन, सत्प्रतिपक्षहेतोर्द्वित्वेन च ज्ञातव्यः। साध्याभावव्याप्यप्रतिहेतुमत्पक्षस्सत्प्रतिपक्ष इति यावत्। साध्याभाव-साधको हेतुः साध्यसाधकत्वेनोपन्यस्त इत्यसामर्थ्यसूचनमपि।

आश्रयासिद्ध इति। आश्रयासिद्धिर्नाम—पक्षतावच्छेदकविशिष्ट-पक्षाप्रसिद्धिः। यथेति। अत्रारविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्व-विशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्धः फलम्।

स्वरूपासिद्ध इति। स्वरूपासिद्धिर्नाम—पक्षे हेत्वभावः। तथा च हेत्वभावविशिष्टपक्षज्ञानात्पक्षविशेष्यकहेतुप्रकारकपरामर्शानुपपत्त्या परा-मर्शप्रतिबन्धः फलम्।

व्याप्यत्वासिद्ध इति। प्रकृते धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं

❀ दीपिका ❀

असिद्धं विभजते—असिद्ध इति। आश्रयासिद्धमुदाहरति—गगनेति। स्वरूपासिद्धमुदाहरति—शब्द इति।

कत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिक-रणात्यन्ताभावाप्रतियोगित्वं–साध्यव्यापकत्वम्। साधनव-न्निष्ठात्यन्ताभावप्रतियोगित्वं–साधनाव्यापकत्वम्। यथा 'पर्वतो धूमवान्वह्निमत्त्वात्', इत्यत्रार्द्रेन्धनसंयोग उपाधिः। तथा हि यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वम्।

❀ न्यायबोधिनी ❀

चेद् धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं गृहीतम्, एवं वह्नेरव्यापकत्वमार्द्रेन्धन-संयोगे गृहीतं चेद्वह्नौ तदव्याप्यत्वं गृहीतं, तदेव व्यभिचरितत्वम्। तथा चोपाधिव्यभिचरितत्वं साधने गृहीतं चेदुपाधिभूतार्द्रेन्धनसंयोगव्याप्यधू-मव्यभिचारित्वं गृहीतमेव। अनुमानप्रकारश्च–पूर्वानुमानस्थहेतुं पक्षीकृत्य–'वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात्, घट-त्वादिवत्, यो यत्साध्यव्यापकव्यभिचारी स सर्वोऽपि साध्यव्यभिचारी'ति बोध्यः। एवम्प्रकारेण प्रकृतानुमानहेतुभूते पक्षे साध्यव्यभिचारोत्थापकतया दूषकत्वमुपाधेः फलम्। तथा च धूमाभाववद्वृत्तित्वरूपधूमव्यभिचारे गृहीते वह्नौ धूमाभाववदवृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम्।

❀ दीपिका ❀

व्याप्यत्वासिद्धस्य लक्षणमाह–सोपाधिक इति। उपाधेर्लक्षण-माह -साध्येति। उपाधिश्चतुर्विधः–केवलसाध्यव्यापकः, पक्षधर्मा-वच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीन-

❀ परिमलः ❀

मूले—सोपाधिक इति (पृ० ११६)। उपाधिविशिष्ट इत्यर्थः। साध्यव्यापकत्वं = धूमव्यापकत्वम्। साधनाव्यापकत्वं = वह्निरूपहेतोरव्याप-कत्वम्। उपाधिरिति। अत्रार्द्रेन्धनसंयोगस्य धूमरूपसाध्याधिकरणे महानसादौ यावत्येव वर्त्तमानतया साध्यव्यापकत्वं, वह्निरूपहेत्वधिकरणे यावदन्तर्गतेऽयोगोलके चावर्त्तमानतया वह्निरूपहेत्वव्यापकत्वमिति तस्यो-पाधित्वं स्पष्टम्, वह्निमत्त्वं = वह्निरूपो हेतुः।

यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति—अयोगोलके आर्द्रेन्धना-भावात्—इति साधनाव्यापकत्वम्। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः, सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम्।

❀ दीपिका ❀

धर्मावच्छिन्नसाध्यव्यापकश्चेति। आद्य आर्द्रेन्धनसंयोगः। द्वितीयो यथा—'वायुः प्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वम्। तृतीयो यथा—'प्रागभावो विनाशी जन्यत्वात्' इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम्। चतुर्थस्तु 'प्रागभावो विनाशी प्रमेयत्वात्' इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम्।

❀ परिमलः ❀

दीपिकायाम्—आद्यः = केवलसाध्यव्यापकः, आर्द्रेन्धनसंयोगस्य धूममात्रव्यापकतया शुद्धसाध्यव्यापकत्वं बोध्यम्। द्वितीयः = पक्षधर्मविशिष्टसाध्यव्यापकः, बहिर्द्रव्येति। अयम्भावः—प्रत्यक्षत्वरूपसाध्यस्यात्मन्यपि सत्त्वेन तत्र चोद्भूतरूपस्वरूपोपाधेरसत्त्वादुद्भूतरूपं न शुद्धसाध्यव्यापकम्, अतः—वायुरूपपक्षवृत्ति—बहिर्द्रव्यत्वविशिष्ट—प्रत्यक्षत्वस्य पृथिव्यादित्रय एव वर्त्तमानतया तत्र चोद्भूतरूपस्य सत्त्वात्पक्षधर्म—बहिर्द्रव्यत्व—विशिष्ट—प्रत्यक्षत्वव्यापकत्वमुपाधेः सुघटं, तादृशबहिर्द्रव्यत्वविशिष्ट—प्रत्यक्षस्पर्शाश्रयत्वस्य वायावपि वर्त्तमानतया तत्रोद्भूतरूपाभावान्नोद्भूतरूपं प्रत्यक्षस्पर्शाश्रयत्वरूप—हेतुव्यापकमिति। बहिर्द्रव्यत्वञ्च—आत्म—मनो—भिन्नद्रव्यत्वम्।

तृतीयः = साधनावच्छिन्नसाध्यव्यापकः, भावत्वमिति। अयम्भावः—विनाशित्वस्य प्रागभावेऽपि वर्त्तमानतया तत्र च भावत्वस्यासत्त्वात् केवल-

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः। यथा 'वह्निरनुष्णो द्रव्यत्वा'दिति। अत्रानुष्णत्वं साध्यं तदभाव**

❀ न्यायबोधिनी ❀

**यस्येति।** यस्य = हेतोः 'साध्याभावः = साध्यबाधः। 'प्रमाणान्तरेण = प्रत्यक्षादिप्रमाणेन। पक्षे निश्चितः = सबाधित इत्यर्थः। तथा च

❀ दीपिका ❀

बाधितस्य लक्षणमाह—यस्येति। अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन,–सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन,–साक्षादनुमिति-

❀ परिमलः ❀

साध्यादिव्यापकत्वं नोपाधेः सम्भवति, अतस्तादृशजन्यत्वरूपहेतुविशिष्ट–विनाशित्व–व्यापकत्वमुपाधौ वक्तव्यं, तादृशविनाशित्वस्य च घट–पटादावेव सत्त्वेन तत्र च भावत्वस्य सत्त्वाद्भवति भावत्वं साध्यव्यापकमिति। चतुर्थः = पक्षधर्म–साध्यधर्मातिरिक्तसाध्यव्यापकः, जन्यत्वावच्छिन्नाऽनित्यत्वव्यापकं = पक्षधर्मसाध्याद्यतिरिक्तं यज्जन्यत्वं तद्विशिष्टस्य विनाशित्वरूपसाध्यस्य व्यापकं, तथा च केवलविनाशित्वरूपसाध्यवति प्रागभावे भावत्वस्योपाधेरसत्त्वेन तस्य साध्याव्यापकत्वेऽपि जन्यत्वविशिष्टविनाशित्वरूपसाध्यवति घट–पटादौ सर्वत्रैव भावत्वस्य विद्यमानतयोदासीनधर्मविशिष्टसाध्यव्यापकत्वं भावत्वरूपोपाधेरस्त्येवेत्याशयः।

मूले—**स्पार्शनप्रत्यक्षेणेति।** स्पार्शनप्रत्यक्षात्मकप्रमाणेनेत्यर्थः। दीपिकायां—**ग्राह्याभावेति।** तदभाव—(साध्याभाव)—वत्तानिश्चयत्वेनेत्यर्थः। यथा–'ह्रदो वह्निमा'नित्यादौ वह्न्यभावनिश्चयत्वेन वह्न्यनुमितिप्रतिबन्धकत्वं 'वह्न्यभाववान्ह्रद' इति निश्चयस्य, ग्राह्यं = प्रतिबध्यज्ञानविषयीभूतं, तच्च–प्रकृते वह्न्यादिकं, तदभावः = वह्न्यभावः, विरोधिज्ञानसामग्रीत्वेन = साध्याभावानुमितिसामग्रीत्वेन, 'सत्प्रतिपक्षस्य हेतो'रिति

उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यत इति—बाधितत्वम् ॥ ४८ ॥
व्याख्यातमनुमानम् ।



❀ न्यायबोधिनी ❀

प्रत्यक्षिकसाध्यबाधनिश्चये जाते साध्यानुमितिप्रतिबन्धः फलम् । बाधितसाध्यकत्वाद्बाधितहेतुरित्युच्यते॥ ❀इति न्यायबोधिन्यामनुमानपरिच्छेदः❀ ।



❀ दीपिका ❀

प्रतिबन्धकत्वम् । इतरेषां परामर्शप्रतिबन्धकत्वम् । तत्रापि साधारणस्याव्यभिचाराभाववत्तया, विरुद्धस्य सामानाधिकरण्याभाववत्तया, व्याप्यत्वासिद्धस्य विशिष्टव्याप्त्यभाववत्तया, असाधारणानुपसंहारि-

❀ परिमलः ❀

शेषः । इतरेषां = व्यभिचारादीनां, ग्रहाणां, **परामर्शेति** । तथा च व्यभिचारादयः परम्परयैवानुमितिप्रतिबन्धका भवन्तीति सूचितम् । तत्रापि = व्यभिचारादिग्रहेष्वपि, साधारणस्य = साधारण्यस्य, भावप्रधाननिर्देशात् : **अव्यभिचाराभाववत्तयेति** । साधारण्यस्य व्याप्त्यभाववत्तया तद्ग्रहस्य व्याप्तिज्ञानप्रतिबन्धकत्वमित्यर्थः । साध्याभाववद्वृत्तिर्हेतुर्हि 'साधारण'-इत्युच्यते, तथा च हेतौ साध्याभाववद्वृत्तित्वस्य व्यभिचारतया तद्ग्रहस्य (मणिमन्त्रादिन्यायेन) अव्यभिचारात्मकव्याप्तिग्रहप्रतिबन्धकत्वमित्याशयः । व्याप्यत्वासिद्धस्य = 'धूमवान्वह्ने'रित्यादौ सोपाधिकस्य वह्न्यादिहेतोः, विशिष्टव्याप्त्यभाववत्तया = हेतुव्यापकसाध्यसामानाधिकरण्याभावरूपतया व्याप्तिग्रहप्रतिबन्धकत्वमित्यन्वयः ।

**असाधारणेति** । 'शब्दोऽनित्यः शब्दत्वा'दित्यत्र, 'सर्वमनित्यं प्रमेयत्वा'दित्यत्र च—हेतावसाधारण्यानुपसंहारित्वज्ञानदशायां हेतुसाध्ययोः सामानाधिकरण्यनिश्चयासम्भवेन—[—पक्षे च साध्यसंशयस्यैव सत्त्वेन—]—व्याप्तिसंशयसम्भवाद्व्याप्तिज्ञानप्रतिबन्धकत्वमसाधारण्यादिग्रहस्येत्याशयः ।

❀ दीपिका ❀

णोर्व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम् । आश्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम् । उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः । सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धेऽन्तर्भवतीति प्राञ्चः । निग्रहस्थानान्तरमिति—नवीनाः । ❀ इत्यनुमानपरिच्छेदः । ❀

❀ परिमलः ❀

**पक्षधर्मताज्ञानेति**। पक्षे पक्षतावच्छेदकविरहनिश्चयदशायां, पक्षे हेतुविरहनिश्चयदशायाञ्च हेतौ—पक्षतावच्छेदकविशिष्टपक्ष—वृत्तित्वग्रहासम्भवात्, [आश्रयासिद्धे पक्षतावच्छेदकविशिष्टपक्षस्यैवाभावात्, स्वरूपासिद्धे हेतौ च पक्षवृत्तित्वस्यैवाभावादिति भावः । ]

**व्यभिचारज्ञानद्वारेति**। उपाधिर्व्यभिचारं हेतौ ग्राहयति, व्यभिचारज्ञानञ्च तदभाववत्ताज्ञानमुद्रया व्याप्तिग्रहं प्रतिबध्नातीति व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकस्योपाधेर्न हेत्वाभासत्वं, साक्षादनुमिति-तत्करण-व्याप्तिज्ञानप्रतिबन्धकस्यैव हेत्वाभासत्वोपगमादिति भावः ।

ननु प्राचीनमते साध्यनिश्चयात्मकसिद्धिसत्त्वे साध्यसन्देहरूपपक्षताया अभावादनुमितेरनुत्पत्त्याऽनुमितिप्रतिबन्धकयथार्थज्ञानविषय—साध्यवत्पक्षात्मकसिद्धसाधनस्य हेत्वाभासत्वौचित्यमित्याशङ्क्य समाधत्ते—**सिद्धसाधनन्त्विति**। **पक्षताविघटकतयेति**। साध्यसन्देहात्मकपक्षतायाः प्राचीनसम्मतायाः साध्यनिश्चयेन विघटनं युक्तमेवेत्याशयः। **आश्रयासिद्ध इति**। एवञ्च न हेत्वाभासाधिक्यमिति भावः। **निग्रहस्थानान्तरमिति**। हेत्वाभासवद्वादिपराजयस्थानविशेष इति न हेत्वाभासाधिक्यमिति भावः ।

❀ इति श्रीगुरुप्रसादशास्त्रिविरचिते परिमलेऽनुमानखण्डम् । ❀

---

# ❀ अथ उपमानम् ❀



**उपमितिकरणमुपमानम् । संज्ञासंज्ञिसम्बन्धज्ञानमुप-**

❀ न्यायबोधिनी ❀

उपमानं लक्षयति—**उपमितिकरणमिति** । उपमितिं लक्षयति—**संज्ञासंज्ञीति** । संज्ञा नाम—पदम् संज्ञी = अर्थः । तयोः सम्बन्धः = शक्तिः । तथा च पदपदार्थसम्बन्धज्ञानमुपमितिरित्यर्थः । उपमानं नामातिदेशवाक्यार्थज्ञानम्, अतिदेशवाक्यार्थस्मरणं व्यापारः, उपमितिः फलम् ।

❀ दीपिका ❀

उपमानं लक्षयति—**उपमितीति** ।

❀ इत्युपमानपरिच्छेदः । ❀

❀ परिमलः ❀

लक्षयति = अवसरसङ्गत्याऽनुमानानन्तरमुपमानं निरूपयति, स्वनिरूपणप्रतिबन्धकीभूतजिज्ञासानिवृत्तावनन्तरनिरूपणीयत्वमवसरसङ्गतिः,—अनुमानोपमानयोर्द्वयोरपि प्रत्यक्षकार्यत्वेन प्रत्यक्षानन्तरं निरूपणीयत्वेऽपि—अनुमानस्य बहुवादिसम्मतत्वाद्बहुलमुपयुज्यमानत्वाच्च शिष्यजिज्ञासा तत्रैव पूर्वं जायत इति—उपमानात्प्रागनुमानं निरूप्य—प्रतिबन्धकजिज्ञासानिवृत्त्याऽनन्तरनिरूपणीतयाऽवसरसङ्गत्योपमानं निरूपयतीति भावः ।

मूले—**उपमितीति** । उपमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वे सति व्यापारवत्त्वमुपमानत्वम्' । तस्य 'गवयो गवयपदवाच्य'इत्याकारकोपमाने सत्त्वाद् 'गोसदृशो गवय'इत्यतिदेशवाक्यार्थस्मरणात्मकव्यापारवत्त्वाच्च लक्षणसमन्वयः । **सञ्ज्ञेति** । गवयपदं—सञ्ज्ञा, गवयः—सञ्ज्ञी, वाच्य-वाचकभावापरपर्यायः—शक्त्याख्यः—सम्बन्धः, तद्विषयकं ज्ञानमुपमितिरित्यर्थः ।

मितिः, तत्करणं सादृश्यज्ञानं । तथा हि कश्चिद्गवयशब्द-वाच्यमजानन्कुतश्चिदारण्यकपुरुषाद् 'गोसदृशो गवयः' इति श्रुत्वा, वनं गतो, वाक्यार्थं स्मरन् , गोसदृशं पिण्डं पश्यति,

❀ न्यायबोधिनी ❀

'गोसदृशो गवयपदवाच्य' इत्याकारकवाक्याद्गोसादृश्यावच्छिन्नविशेष्यकगवय-पदवाच्यत्वप्रकारकं यज्ज्ञानं जायते तदेव करणम् ॥ ४९ ॥

❀ इति न्यायबोधिन्यामुपमानपरिच्छेदः । ❀

---

❀ परिमलः ❀

तथा च—गवयत्वावच्छिन्नविशेष्यकं, गवयपदवाच्यत्वप्रकारकं,—'गवयो गवयपदवाच्य' इति ज्ञानं—सञ्ज्ञा–सञ्ज्ञि–सम्बन्धावगाहितयोपमिति-रित्युच्यते, एवञ्च पद–पदार्थ–सम्बन्धविषयकं ज्ञानमुपमितिरिति लक्षणं बोध्यमित्याशयः । तत्करणम् = उपमितिकरणं, सादृश्यज्ञानं = गोसादृश्याव-च्छिन्नविशेष्यकं गवयपदवाच्यत्वप्रकारकं–'गोसदृशो गवय' इति ज्ञानम्, 'उपमितिकरणत्वादुपमानमित्युच्यत' इति शेषः ।

**अतिदेशेति** । अतिदेशवाक्यं = 'गोसदृशो गवयपदवाच्य' इति वाक्यं, तदर्थविषयकस्मरणं—सादृश्यज्ञानजन्यत्वे सति सादृश्यज्ञानजन्यो-पमितिजनकत्वाद्व्यापार इत्यर्थः । सादृश्यज्ञानस्योपमितिकरणतां दर्शयति—**तथा हीति** । गवयशब्दवाच्यं = 'गवय'शब्दार्थभूतं, गोसमानाकृतिं, मृग-विशेषम्, अजानन् = अपरिचिन्वन्, आरण्यकात् = वनेचरात् ,—तद-भिज्ञात्, इति = इत्थमतिदेशवाक्यं, श्रुत्वा = आकर्ण्य, 'गोसदृशो गवय-पदवाच्य'इतितदर्थं विज्ञाये'ति शेषः । **वाक्यार्थं स्मरन्निति** । वर्त्तमान-सामीप्ये लट्, वाक्यार्थं स्मरिष्यन् पिण्डं पश्यतीत्यर्थः, पिण्डं दृष्ट्वा

तदनन्तरम् 'अयं गवयशब्दवाच्यः' इत्युपमितिरुत्पद्यते ।

## * इत्युपमानम् *

❀ परिमलः ❀

वाक्यार्थं स्मरतीति यावत् । एवञ्च वाक्यार्थस्मरणस्य सादृश्यदर्शनजन्यत्वलाभाद्व्यापारत्वलाभः । पिण्डं = शरीरं, गवयमिति यावत् ।

तदनन्तरं = गवये गोनिरूपितसादृश्यज्ञानानन्तरम्, अयम् = गवयः, गवयान्तरे शक्तिग्रहाभावापत्तेर्यथाश्रुतं तु न युक्तम् । एवञ्च 'गोसदृशो गवयपदवाच्य' इत्यतिदेशवाक्यार्थज्ञानम्—उपमानम्, 'गोसदृशो गवयपदवाच्य' इत्यतिदेशवाक्यार्थस्मरणं—व्यापारः, 'गवयो गवयपदवाच्य'इति ज्ञानम्—उपमितिरिति सूचितमिति तत्त्वम् ।

इति श्री'गुरुप्रसादशास्त्रि'सङ्कलिते'ऽभिनव-राजलक्ष्मीपरिमले'

❀ उपमानखण्डम् ❀



## ❀ अथ शब्दः ❀

आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता । वाक्यं पदसमूहः । यथा 'गामानय शुक्लां दण्डेने'ति ।

❀ न्यायबोधिनी ❀

शब्दं लक्षयति—**आप्तेति** । आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य

❀ दीपिका ❀

शब्दं लक्षयति—आप्तेति । वाक्यं लक्षयति—वाक्यमिति ।

❀ परिमलः ❀

**आप्तवाक्यमिति** । 'शब्द'इत्यस्य—प्रमाणशब्द इत्यर्थः, एवञ्च यथार्थशब्दस्यैवात्र लक्ष्यत्वमिति सूचितं, तथा च—आप्तस्य यथार्थ-

न्यायबोधिनी

लक्षणम्, प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम्, वाक्यत्वमात्रोक्तावनाप्तोच्चरितवाक्येऽतिव्याप्तिरत 'आप्तोच्चरित्व'निवेशः। तावन्मात्रोक्तौ जवगडदशादावतिव्याप्तिरतो 'वाक्यत्व'म्। आप्तत्वं—च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्, तथा च प्रयोगहेतुभूतयथार्थज्ञानजन्यशब्दत्वमिति पर्यवसन्नोऽर्थः। वस्तुतस्तु पदज्ञानं करणम्, वृत्तिज्ञानसहकृतपदज्ञानजन्यपदार्थोपस्थितिर्व्यापारः, वाक्यार्थज्ञानं = शाब्दबोधः—फलम्। वृत्तिर्नामशक्तिलक्षणान्यतररूपा,— शक्तिर्नामघटादिविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसङ्केतः।

ईश्वरसङ्केतो नाम = ईश्वरेच्छा, सैव शक्तिरित्यर्थः। शक्तिनिरूपकत्वमेव पदेशक्तत्वम्। विषयतासम्बन्धेन शक्त्याश्रयत्वं—अर्थे शक्यत्वम्। शक्यसम्बन्धो लक्षणा, सा द्विविधा·गौणी, शुद्धा चेति। गौणी नाम सादृश्यविशिष्टे लक्षणा। यथा 'सिंहो माणवक' इत्यादौ सिंहपदस्य सिंहसादृश्यविशिष्टे लक्षणा।

शुद्धा त्रिविधा—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति। लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका—जहल्लक्षणा। यथा 'गङ्गायां घोप' इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धस्य तीरे सत्त्वात्तादृशशक्यसम्बन्धरूपलक्षणाज्ञानाद्गङ्गापदात्तीरोपस्थितिः। लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका—अजहल्लक्षणा। यथा 'काकेभ्यो दधि रक्ष्यता'—मित्यत्र काकपदस्य दध्युपघातके लक्षणा, लक्ष्यतावच्छेदकं दध्युपघातकत्वं, तेन रूपेण दध्युपघातकानां सर्वेषां काकबिडालकुक्कुटसारमेयादीनां शक्यलक्ष्याणां बोधात्। जहदजहल्लक्षणा—वेदान्तिनां मते,—सा च शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका, यथा 'तत्त्वमसी'त्यत्र सर्वज्ञत्वकिञ्चिज्ज्ञत्वपरित्यागेन व्यक्तिमात्रबोधनात्॥ ५०॥

❀ परिमलः ❀

वक्तृत्वात्—अयथार्थशब्दे आप्तोक्तित्वाभावादव्याप्तिरिति नाशङ्कनीयम्, यथार्थशब्दस्यैवात्र लक्ष्यत्वात्, 'पयसा सिञ्चति', 'रथेन गच्छती'त्यादीना-

**शक्तं पदम्। 'अस्मात्पदादयमर्थो बोद्धव्य' इतीश्वर-सङ्केतः—शक्तिः ॥५०॥**

※ दीपिका ※

पदलक्षणमाह—**शक्तमिति**। अर्थस्मृत्यनुकूलपदार्थसम्बन्धः शक्तिः। सा च पदार्थान्तरमिति मीमांसकाः, तन्निरासार्थमाह—**अस्मादिति**। डित्थादीनामिव घटादीनामपि सङ्केत एव शक्तिः, न तु पदार्थान्तरमित्यर्थः।

※ परिमलः ※

माप्तवाक्यत्वात्प्रमाणशब्दत्वम्, न तु 'वह्निना सिञ्चति' 'वृक्षेण गच्छती'-त्यादेः, तदुच्चारयितुर्यथार्थवक्तृत्वरूपाप्तत्वाभावात्, प्रकृतवाक्यार्थविषयक-यथार्थज्ञानजन्यवाक्यस्यैव प्रमाणशब्दत्वात्, 'अर्थं बुध्वा वाक्यप्रयोग' इति न्यायाद्वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वात्,—'वह्निना सिञ्चती'त्यादेश्चा-यथार्थज्ञानजन्यवाक्यत्वविरहादिति भावः। 'गामानये'त्यादौ तु यथार्थ-ज्ञानस्यैव हेतुतया लक्षणसमन्वयः।

**पदसमूह इति**। नैयायिकनये शक्तमात्रस्यैव पदत्वात्सुप्तिङादीनां प्रत्ययानां शक्तिमत्त्वात्पदत्वं, वैयाकरणमते तु सुप्तिङन्तानामेव पदत्वमिति विवेकः। निरूपकतासम्बन्धेन शक्तिविशिष्टं—शक्तम्। **अर्थेति**। शाब्द-बोधजनकोपस्थित्यनुकूलः पद-पदार्थयोः सम्बन्ध इत्यर्थः। सा च = शक्तिश्च, पदार्थान्तरं = सप्तपदार्थातिरिक्तः पदार्थः। **अस्माच्छब्दा-दिति**। एतच्छब्दजन्यैतदर्थविषयकबोधविषयत्वप्रकारतानिरूपितभगवदि-च्छीया, इच्छीया वा, या विशेष्यता,—तच्छालि ज्ञानं शक्तिज्ञानमित्यर्थः, सङ्केतः = इच्छा।

**डित्थादीनामिवेति**। यथा द्वादशेऽह्नि पितेतिश्रुत्याऽऽधुनिकसङ्के-तवत्त्वेन डित्थादिनाम्नां तत्तदर्थबोधकत्वं, तथा घटादिपदानामपीति तुल्यतये-

❀ दीपिका ❀

'गवादिशब्दानां जातावेव शक्तिः, विशेषणतया जातेः प्रथम-

❀ परिमलः ❀

च्छावत्त्वमात्रमेव शक्तिः, आधुनिकचैत्र-मैत्रादि-वाचकपदा-ऽनुरोधादिती-च्छायामीश्वरीयत्वं न देयमेवेत्याशयः।

गवादिपदानां गोत्वादिजातावेव शक्तिः, गवादिव्यक्तिलाभस्तु बन्ध-नादीनां जातावसम्भवदाक्षेपादिति मीमांसकमतं दूषयितुमुपन्यस्यति—**—गवादीति**। विशेषणतया = प्रकारतया, **प्रथममिति**। विशेषणज्ञानं विना विशिष्टबोधानुदयात्प्रथमं जातिग्रहस्यावश्यकतया तत्रैव लाघवा-च्छक्तिराश्रीयत इत्याशयः। **आक्षेपादिति**। अर्थापत्त्याख्यप्रमाणान्तरान्मी-मांसकाभिमतादित्यर्थः। 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यत' इति न्यायाद्व्यक्तिं विना बन्धनानुपपत्तेर्व्यक्तेराक्षेप इत्याशयः। नैयायिकमते त्वाक्षेपादित्यस्यानुमानादित्यर्थः।

**गवादिशब्दानामिति**। 'आदि'पदादश्वादिपरिग्रहः, एवकारेण व्यक्तौ शक्तिर्नास्तीति सूचितम्। जातिशक्तिवादिनां मीमांसकानामयमाशयः—विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतया प्रथमं गोत्वादिजातिज्ञानं विना गोत्वविशिष्टगोव्यक्तेर्ज्ञानमेव न सम्भवतीति—प्रथमं गोत्वभानार्थं गोशब्दस्य गोत्वे शक्तिरावश्यिकी, एवञ्च तत्रैव शक्तिस्वीकारेणैवोपपत्तौ गौरवादानन्त्या-च्च गवादिव्यक्तौ शक्तिर्न स्वीकर्त्तव्या।

न चैवं 'गामानये' त्यत्र गोकर्मताकत्वेन गवादेरानयनं सर्वानुभवसिद्धं न स्यात्, गवादेरशक्यत्वात्, अशक्यस्य शाब्दबोधविषयत्वस्वीकारे घटादेरपि तत्रानयनापत्तिः स्यादिति वाच्यम्। 'आनयनं गोवृत्तिकर्मताकं, स्वाश्रयवृत्ति-त्वसम्बन्धेन गोत्ववृत्तिकर्मताकत्वा' दित्यनुमानादेव निरुक्तगोत्वकर्मताका-नयनबोधोत्तरकाले गोकर्मताकत्वेनानयनादेर्बोधसम्भवादिति।

विनाप्याक्षेपं 'गामानये'त्यादिवाक्याद्गोकर्मताकत्वेनानयनबोधस्य सर्वानु-

❀ दीपिका ❀

मुपस्थितत्वात्, व्यक्तिलाभस्त्वाक्षेपा'दिति केचित्, तन्न, गामानयेत्यादौ वृद्धव्यवहारेण सर्वत्रानयनादेर्व्यक्तावेव सम्भवेन जातिविशिष्टव्यक्तावेव शक्तिकल्पनात्।

शक्तिग्रहश्च वृद्धव्यवहारेण। तथा हि—व्युत्पित्सुर्बालो 'गामानय' इत्युत्तमवृद्धवाक्यश्रवणान्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य, गवानयनं च दृष्ट्वा, मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य, 'अश्वमानय, गां बधान' इति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिः, अश्वपदस्य अश्व-

❀ परिमलः ❀

भवसिद्धतया गोव्यक्तेरशक्यत्वे तादृशवाक्यात्तादृशशाब्दबोध एव न सम्भवतीत्याशयेन दूषयति—**तन्नेति**। वृद्धव्यवहारेण = प्रयोज्य-प्रयोजकवृद्धव्यवहारेण, सर्वत्र = शाब्दबोधे, व्यक्तावेव सम्भवेन=व्यक्तिविषयताकत्वस्यानुभवसिद्धत्वेन, जातिविशिष्टव्यक्तौ = जातौ व्यक्तौ, तयोः सम्बन्धे च, शक्तेः = शक्यत्वस्य, कल्पनात् = निश्चयात्।

ननु जातिव्यक्त्यादौ शक्तिग्रह एव भवन्मते कुतो भवतीत्यत आह—**शक्तिग्रहश्चेति**। वृद्धव्यवहारेण = बालकस्य प्रथमं प्रयोज्य—प्रयोजकवृद्धव्यवहारेण, 'भवती'ति शेषः। व्युत्पित्सुः = शक्तिज्ञानेच्छावान्, **उत्तमेति**। उत्तमवृद्धः=प्रयोजकवृद्धः, तस्य वाक्यश्रवणानन्तर मित्यर्थः। मध्यमवृद्धस्य= प्रयोज्यवृद्धस्य, प्रवृत्तिं = गवानयनादिप्रयत्नम्, उपलभ्य = निश्चित्य, दृष्ट्वा = प्रत्यक्षीकृत्य, **मध्यमवृद्धेति**। मध्यमवृद्धस्य गवानयनादौ या प्रवृत्तिः = प्रयत्नं, तज्जनकं यद्गोकर्मताकानयनज्ञानं, तत्र पूर्वोक्तोत्तमवृद्धोक्त—'गामानये'ति वाक्यजन्यत्वं—'वाक्यसत्त्वे तादृशबोधः, असत्त्वे च ने'त्याकारकान्वयव्यतिरेकाभ्यां,—निश्चित्य, आवापोद्वापाभ्याम् = अन्वयव्यतिरेकाभ्यां,

❁ दीपिका ❁

त्वविशिष्टे शक्तिः, इति व्युत्पद्यते ।

ननु सर्वत्र कार्यपरत्वाद्व्यवहारस्य कार्यवाक्ये एव व्युत्पत्तिः, न सिद्धे इति चेन्न, 'काञ्च्यां त्रिभुवनतिलको भूपति' रित्यादौ सिद्धेऽपि व्यवहारात् । 'विकसितपद्मे मधूनि पिबति मधुकरः' इत्यादौ

❁ परिमलः ❁

व्युत्पद्यते = शक्तिज्ञानवान् भवति,—'बाल' इति पूर्वेणान्वयः ।

ननु—"प्रयोज्य-प्रयोजकवृद्धव्यवहाराद्बालो—'घटानयनरूपं कार्यं—घटमानयेति—शब्दप्रयोज्य'मिति निश्चिनोति, ततश्चा'श्वं नय' 'गां बधाने'त्यादिवाक्यादावापोद्वापाभ्यां गवादिपदानामानयनादिकार्यान्वितगवादौ शक्तिं गृह्णाति, तदेवं 'भूतले नीलो घट' इत्यादिसिद्धशब्दान्न शाब्दबोधः, तेषां कार्यत्वबोधकलिङादिसमभिव्याहाराभावेन कार्यताबोधकत्वाभावात्, न च घटादिपदेभ्योऽपि कार्यत्वबोधसम्भवाद्भूतले घटोऽस्तीत्यादेरपि कार्यवाक्यत्वमेव, वृद्धव्यवहारेण घटादावपि कार्यत्वविशिष्टघटादिबोधकत्वनिश्चयादिति वाच्यम्, घटादिपदानां कार्यत्वानुभवं प्रति हेतुत्वेऽपि घटादिपदेषु कार्यत्वस्मारकशक्त्यभावात्, कार्यत्वस्मारकशक्तिमल्लिङादिसमभिव्याहाराभावाच्च 'घटोऽस्ती'त्यादेः कार्यवाक्यत्वासम्भवाच्छाब्दबोधासम्भव"—इति—प्रभाकरमतानुसारेणाशङ्कते—**नन्विति** । सर्वत्र = लोके, 'व्यवहारस्य कार्यपरत्वा'दित्यन्वयः । कार्यवाक्ये = कार्यत्वोपस्थापक—[ स्मारक ]—शक्तिमल्लिङादि—समभिव्याहृते 'घटमानये'त्यादिवाक्ये, व्युत्पत्तिः = शक्तिग्रहः, 'तथा च तत्रैव शाब्दबोध' इति शेषः । सिद्धे = कार्यत्वविषयकबोधाजनके 'घटोऽस्ती'त्यादौ ।

आदौ कार्यान्वितघटादौ शक्तेरवधारणेपि लाघवेन तत्परित्यागः, तथैवान्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयतीत्याशयेन प्रभाकरमतं निरस्यति—**नेति** । काञ्ची = दक्षिणदेशप्रसिद्धा नगरी, 'त्रिभुवनतिलक' इति राज्ञो नामधेयम् । **व्यवहारादिति** । तथा च

❁ दीपिका ❁

प्रसिद्ध-पदसमभिव्याहारात्सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनाच्च ।

लक्षणाऽपि शब्दवृत्तिः । शक्यसम्बन्धो लक्षणा । 'गङ्गायां घोषः' इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धादेव तीरोपस्थितौ तीरेऽपि शक्तिर्न कल्प्यते । सैन्धवादौ लवणाश्वयोः परस्परसम्बन्धाभावात नानाशक्तिकल्पनम् । लक्षणा त्रिविधा,—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति । यत्र वाच्यार्थस्यान्वयाभावः तत्र जहल्लक्षणा,—यथा 'मञ्चाः क्रोशन्ति' । यत्र वाच्यार्थस्याप्यन्वयः तत्र—अजहदिति,—यथा 'छत्रिणो गच्छन्ति' । यत्र वाच्यैकदेशत्यागेन

❁ दीपिका ❁

व्यवहाराद्बालस्य सिद्धेऽपि—कार्य इव—शक्तिग्रहः स्यादेवेति तत्र शाब्दबोधे बाधाभाव इत्याशयः। **प्रसिद्धेति** । पद्मादि-मध्वादिशब्दसान्निध्यादित्यर्थः । सिद्धेऽपि = लोट्-लिङादिशून्येऽपि, मधुकरादिव्युत्पत्तिदर्शनात् = 'मधुकर'-शब्दादिशक्तिनिश्चयात् ।

शब्दवृत्तिः = अर्थनिरूपिता शब्दनिष्ठा लक्षणात्मिकाऽपि 'वृत्तिः', 'अस्ती'तिशेषः । शक्यसम्बन्धः = गङ्गादिपदशक्य—प्रवावाहादि-सम्बन्धः, तीरोपस्थितौ = तीरस्मरणे, तीरेऽपि = प्रवाह इव तीरेऽपि, न कल्प्यते—'गङ्गापदस्ये'ति शेषः । लवणाश्वयोः = सैन्धवपद-शक्ययोः, **नानेति** । सैन्धवपदस्य लवणे—सिन्धुदेशजेऽश्वे च पृथक्पृथक्-शक्तिद्वयमित्यर्थः । यत्र = वाक्ये, उदाहरणे 'मञ्च'पदं मञ्चस्थपुरुषे लाक्षणिकं, तत्र मञ्चपदशक्यस्य खट्वादेराक्रोशाऽसम्भवाद्वाच्यार्थस्याक्रोशादावन्वयाभाव इत्याशयः । **वाच्यार्थस्यापीति** । 'अपि' शब्दाल्लक्ष्यार्थस्यापि संग्रहः । **छत्रिण इति** । छत्रिष्वच्छत्रिषु च गच्छत्सु—छत्रिणां बाहुल्याच्छत्रिणो यान्तीति प्रयुक्तं, तत्रच्छत्ररहितानामपि गमनकर्तृत्वा-

❁ दीपिका ❁

**एकदेशान्वयः तत्र जहदजहदिति,–यथा 'तत्त्वमसी'ति । गौण्यपि लक्ष्यमाणगुणसम्बन्धस्वरूपा । यथा 'अग्निर्माणवक' इति ।**

❁ परिमलः ❁

दच्छत्रिपुच्छत्रिणो यान्तीत्यनुपपन्नं, तथा चच्छत्रिपदं छत्र्यच्छत्र्युभय-बोधकं–लक्षणयेति भावः ।

एकदेशान्वयः = वाच्यैकदेशान्वयः, **तत्त्वमसीति ।** अत्र तत्पद-वाच्ये सर्वज्ञत्वादिविशिष्टे ब्रह्मणि—त्वम्पदवाच्यस्याऽन्तःकरणादिविशिष्टस्य जीवस्याऽभेदानुपपत्त्या त्वम्पदार्थगतविशेषणांशपरित्यागः, तथा च त्वम्पद-लक्ष्यस्य शुद्धचैतन्यस्य तत्पदवाच्येन शुद्धेनाभेदान्वयः, तदेवमत्र विशेषणरूपवाच्यैकदेशपरित्यागः, वाच्यैकदेशस्यावशिष्टस्य च विशेष्यभूत-स्यान्वय इति समन्वयः स्पष्टः ।

गौण्या वृत्त्यन्तरत्वं निराचष्टे—**गौण्यपीपि ।** ननु 'गङ्गायां घोष' इत्यत्र शक्यप्रवाहसम्बन्धस्य तीरे सत्त्वाच्छक्यसम्बन्धरूपा लक्षणा तत्र वक्तुमुचिता, 'अग्निर्माणवक' इत्यत्र तु शक्यार्थस्य वह्निरूपस्य माणवकेन सह साक्षात्सम्बन्धाभावात्कथं गौण्या लक्षणायामन्तर्भाव इत्यत आह—**लक्ष्यमाणेति ।** लक्ष्यमाणः = लक्षणया प्रतीयमानो–यो गुणः—शुद्धत्व-निर्मलत्व–पावनत्वादिरूपः, तत्सम्बन्धरूपेत्यर्थः, अयम्भावः—शक्यस्य साक्षात्परम्परासाधारणः सम्बन्धो हि लक्षणा, तत्र 'गङ्गायां घोषः' इत्यत्र शक्येन सह तीरस्य साक्षात्सम्बन्धः, 'अग्निर्माणवक' इत्यत्र तु [1]'स्वनिष्ठशुचित्ववत्त्व'रूपपरम्परासम्बन्धेनाग्नेर्माणवकेन सम्बन्धाल्लक्षणेति–।

"—'तीरे घोष' इत्यनुक्त्वा 'गङ्गायां घोष' इत्युक्तिर्घोषे शैत्यपावन-त्वादिप्रतिपत्त्यर्थं, न हि लक्षणया शीतत्वविशिष्टस्य तीरस्य बोधः कर्त्तुं

१. स्वम्—अग्निः, स्वनिष्ठशुचित्ववत्त्वं–माणवके–बाले इति माणवकेनाग्नेः परम्परासम्बन्धोऽस्त्येव ।

❀ दीपिका ❀

व्यञ्जनापि शक्तिलक्षणान्तर्भूता शब्दशक्तिमूला। अर्थशक्तिमूला च—अनुमानादिनाऽन्यथासिद्धा। तात्पर्यानुपपत्तिर्लक्षणाबी-

❀ दीपिका ❀

शक्यते, केवलतीरलक्षणयैवान्वयानुपपत्तिपरिहारसम्भवाद्विशिष्टे लक्षणाया वक्तुमशक्यत्वादतो व्यञ्जनावृत्तिराश्रयणीया, तया च तीरे शैत्य—पावनत्व-प्रत्यय—" इति आलङ्कारिकमतं निरस्यति—**व्यञ्जनापीति**। **शक्ति-लक्षणान्तर्भूतेति**। क्वचिच्छक्तौ, क्वचिल्लक्षणायाञ्च शब्दशक्तिमूलव्यञ्जनान्तर्भवतीत्यर्थः। अयम्भावः "—'दूरस्था भूधरा रम्या' इत्यादौ 'शब्दशक्तिमूलव्यञ्जनास्थले 'भूधर'शब्देन शक्त्यैव पर्वतानामिव राज्ञामपि बोधः, एवं 'गङ्गायां घोष'इत्यादौ घोषे शैत्यादिप्रतीतिरपि लक्षणयैव, न च तत्र लक्षणायां मानाभाव इति वाच्यं, तात्पर्यानुपपत्तेरेव लक्षणाग्राहकत्वात्, तथा च शब्दशक्तिमूला व्यञ्जना वृत्तिद्वय एवान्तर्भवति, न पृथगङ्गीकार्या—"इति। ननु शब्दशक्तिमूलव्यञ्जनाया वृत्त्यन्तरेऽन्तर्भावेऽपि—'गच्छ गच्छसि चेत्कान्त! पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवा'नित्यादावर्थशक्तिमूलव्यञ्जनायास्तत्रान्तर्भावासम्भवः 'त्वद्विरहे मम मरणमतस्त्वया न गतव्य'मित्यस्यार्थस्य शक्तिलक्षणाभ्यां बोधयितुमशक्यत्वादतोऽर्थशक्तिमूलाया व्यञ्जनाया अन्यथासिद्धिं दर्शयति—**अर्थेति**। चस्त्वर्थे, अर्थशक्तिमूला त्वित्यर्थः। **अनुमानादिनेति**। "येयं मद्गमनोत्तरभाविप्राणवियोगवती, 'ममापि जन्म तत्रैवे'त्यादिविलक्षणशब्दप्रयोक्तृत्वात्" इत्येवमनुमानादिनेत्यर्थः।

**लक्षणाबीजमिति**। 'न त्वन्वयानुपपत्ति'रिति शेषः, अन्वयानुपपत्ते-

---

१. शब्दशक्तिर्मूलं यस्याः सा—शब्दशक्तिमूला, 'गङ्गायां घोष'इत्यत्र गङ्गाशब्दशक्तिरेव शैत्यादिबोधकव्यञ्जनाबीजं, शैत्यादेःप्रवाहवृत्तित्वात्, प्रवाहस्य च गङ्गापदशक्यत्वादित्याशयः।

❀ दीपिका ❀

जम्। तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यज्ञानं च वाक्यार्थज्ञाने हेतुः, नानार्थानुरोधात्। प्रकरणादिकं तात्पर्यग्राहकम्। 'द्वार'मित्यादौ 'पिधेही'ति शब्दाध्याहारः। ननु अर्थज्ञानार्थत्वात् शब्दस्यार्थमविज्ञाय शब्दाध्याहारासम्भवादर्थाध्याहार एव युक्त इति चेन्न, पद-

❀ परिमलः ❀

लक्षणामूलत्वे यष्टीनामपि प्रवेशनस्य सम्भवाल्लक्षणा न स्यात्, तात्पर्यानुपपत्तेर्लक्षणामूलत्वे तु यष्टिधरपुरुषप्रवेशनतात्पर्यानुपपत्त्या तत्र लक्षणा भवत्येवेत्याशयः।

'सैन्धवमानये'त्यादौ नानार्थस्थले लवणेऽश्वे च 'सैन्धव'पदस्य शक्तेस्तुल्यतया—भोजनावसरे लवणस्य, गमनावसरेऽश्वस्य च प्रतीतेस्तात्पर्येणैवोपपादनीयतया वाक्यार्थबोधे तात्पर्यज्ञानस्य हेतुतायाः क्लृप्ततया एकार्थकनानार्थकसामान्ये तात्पर्यज्ञानस्यैव हेतुत्वमङ्गीकार्यमित्याशयवानाह—**तत्प्रतीतीति**। तीरादिरूपार्थेत्यर्थः। नानार्थानुरोधात् = सैन्धवमानये'-त्याद्यनुरोधात्। **प्रकरणादिकमिति**। 'सैन्धवपदं लवणबोधेच्छयोच्चरितं, भोजनप्रकरणोच्चरितत्वा'दित्यनुमानेन प्रकरणादेस्तात्पर्यग्राहकत्वमुपपद्यते इति। आदिपदाच्छब्दान्तरसान्निध्यादेः परिग्रहः, 'सशङ्खचक्रो हरि'रित्यत्र विष्णुरूपार्थबोधस्य शङ्खादिपदसान्निध्यादेवोपपादनीयत्वात्।

**नन्विति**। 'अर्थं बुध्वा वाक्यरचने'तिन्यायादर्थज्ञानं विनाऽऽकाङ्क्षितशब्दपूरणात्मकशब्दाध्याहारासम्भवादर्थाध्याहार एव युक्त इत्याशङ्कितुराशयः। पदजन्यपदार्थोपस्थितेरेव शाब्दबोधजनकतया शाब्दबोधोपपत्तये शब्दाऽध्याहार एवागत्या स्वीकार्य इत्युत्तराशयः। तथा च द्वारकर्मकपिधानानुकूलकृतिमानिति शाब्दबोधार्थं 'पिधेही'तिशब्दाध्याहार आवश्यक इति तत्त्वम्।

कर्मत्वादिपदजन्यपदार्थोपस्थितिसत्त्वेऽपि—घटपदोत्तरामादिपदविशेष-

❀ दीपिका ❀

विशेषजन्यपदार्थोपस्थितेः शाब्दज्ञाने हेतुत्वात्। अन्यथा 'घटः कर्मत्वमानयनं कृतिः' इत्यत्रापि शाब्दज्ञानप्रसङ्गात्।

पङ्कजादिपदेषु योगरूढिः। अवयवशक्तिर्योगः, समुदायशक्ती रूढिः, नियतपद्मत्वज्ञानार्थं समुदायशक्तिः। अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गः।

'इतरान्विते शक्तिः' इति—प्राभाकराः।

'अन्वयस्य वाक्यार्थतया भानसम्भवादन्वयांशेऽपि शक्तिर्न

❀ परिमलः ❀

जन्यपदार्थोपस्थितेरभावान्न तथा शाब्दबोध इत्याशयेनाह—**विशेषेति**। **शाब्दज्ञानेति**। घटकर्मकानयनानुकूलकृतिमा'निति शाब्दबोधप्रसङ्गादित्यर्थः। **योगेति**। योगेन सहिता रूढिर्योगरूढिः, अवयवानां = **प्रकृति-प्रत्ययादीनां**, समुदायशक्तिः = गवादिपदशक्तिः।

पङ्कजादिशब्दे पद्मत्वावच्छिन्ननिरूपितशक्तिं विनाऽवयवशक्तिमात्रेण पद्मभानानियमप्रसङ्ग इत्याशयेनाह—**समुदायशक्तिरिति**। अन्यथा = समुदायशक्त्यनङ्गीकारे, कुमुदेऽपि = कैरवेऽपि, प्रयोगप्रसङ्गः = 'पङ्कज'पद-प्रयोगप्रसङ्गः, कुमुदस्यापि पङ्काज्जातत्वात्, तदेवं पङ्कजशब्दात्कदाचित्कुमुदस्य कदाचित्पद्मस्य चावयवशक्त्या भानं स्यान्न तु नियमेन पद्मस्यैव भानमतः समुदायशक्तिरावश्यकीत्याशयः।

इतरान्विते = कार्यान्विते घटादौ, शक्तिः = घटादिपदशक्तिः, प्राभाकराः = प्रभाकरानुयायिनो मीमांसकाः, वस्तुत 'इतरान्वित' इत्यस्य—'अन्वित' इत्यर्थः, 'घटोऽस्ती'त्यादौ सिद्धे शाब्दबोधानुदयप्रसङ्गात्कार्यांश-परित्यागौचित्यात्। नैयायिकमतं दर्शयति—**अन्वयस्येति**। पदार्थसंसर्ग-स्वरूपस्यान्वयस्य पदसमभिव्याहारबलादेव शाब्दबोधे भानसम्भवात्संसर्गांशे शक्तेः कल्पनं नावश्यकमित्यर्थः। अन्वयस्य = पदार्थसंसर्गस्य, कार्या-

**आकाङ्क्षा, योग्यता, सन्निधिश्च वाक्यार्थज्ञाने हेतुः । पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा ।**

❀ न्यायबोधिनी ❀

आकाङ्क्षां लक्षयति—**पदस्येति** । अव्यवहितोत्तरत्वादिसम्बन्धेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकाङ्क्षा, यथा 'घटमित्यादिस्थलेऽव्यवहितोत्तरत्वादिसम्बन्धेनाम्पदं घटपदवदित्याकारकाम्पदविशेष्यकघटपदप्रकारकज्ञानसत्त्वे 'घटीयं कर्मत्व'मिति बोधो जायते । 'अम्' 'घट' इति विपरीतोच्चारणे तु तादृश-

❀ दीपिका ❀

कल्पनीया' इति—गौतमीयाः ।

**आकाङ्क्षेति** । आकाङ्क्षादिज्ञानमित्यर्थः, अन्यथा आकाङ्क्षादिभ्रमाच्छाब्दभ्रमो न स्यात् । आकाङ्क्षां लक्षयति—**पदस्येति** ।

❀ परिमलः ❀

न्विते घटे शक्तिकल्पनन्तु सिद्धवाक्याच्छाब्दबोधानुदयापत्तेर्दूषणीयमिति तत्त्वम् । गौतमीयाः = नैयायिकाः ।

वाक्यार्थज्ञाने = शाब्दबोधे, अन्यथा = वास्तविकाकाङ्क्षादेः शाब्दधीहेतुत्वे, **आकाङ्क्षादिभ्रमादिति** । भ्रमस्थले वास्तविकाकाङ्क्षाया अभावादित्याशयः । आकाङ्क्षादिज्ञानस्य हेतुत्वे तु भ्रमात्मकतादृशज्ञानसत्त्वाच्छाब्दबोधो भ्रमात्मको जायत एवेति तत्त्वम् । मूले—**पदान्तरव्यतिरेकेति** । यत्पदस्य यत्पदाभावप्रयुक्तं शाब्दबोधाजनकत्वं,—तत्पदसमभिव्याहृततत्पदत्वमाकाङ्क्षेत्यर्थः । [ व्यतिरेकः = अभावः, अन्वयाननुभावकत्वं = शाब्दबोधाजनकत्वम् । ] **अर्थाबाध इति** । बाधनिश्चयाभाव इत्यर्थः । तथा च अग्निना सिञ्चनस्य बाधादग्निना सिञ्चतीति वाक्यं न शाब्दबोधजनकम्,

अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं-सन्निधिः। तथा च आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा 'गौरश्वः पुरुषो हस्ती'ति न प्रमाणम्, आकाङ्क्षाविरहात्। 'अग्निना सिञ्चे'दिति न प्रमाणम्, योग्यताविरहात्। प्रहरे प्रहरे असहोच्चारितानि-'गामानये' त्यादिपदानि न प्रमाणम्, सान्निध्याभावात्॥ ५१॥

❀ न्यायबोधिनी ❀

ज्ञानाभावात्तादृशशाब्दबोधो न जायते-अतस्तादृशाकाङ्क्षाज्ञानं शाब्दबोधे कारणम्। अर्थाबाध इति। बाधाभावो योग्यतेत्यर्थः। 'अग्निना सिञ्चती'त्यत्र सेककरणत्वस्य जलादिधर्मस्य वह्नौ बाधनिश्चयसत्त्वान्न तादृशवाक्याच्छाब्दबोधः। सन्निधिं निरूपयति—पदानामिति। असहोच्चारितानि = विलम्बोच्चारितानि॥ ५१॥

❀ दीपिका ❀

योग्यतालक्षणमाह-अ ति। सन्निधिलक्षणमाह-पदानामिति। अविलम्बेन पदार्थोपस्थितिः-सन्निधिः, उच्चारणं तु तदुपयोगितया उक्तम्, गौरश्व इति। घटः, कर्मत्वमित्यप्यकाङ्क्षोदाहरणं द्रष्टव्यम्।

❀ परिमलः ❀

योग्यताविरहात्, सन्निधिर्ज्ञानात्मिका, नोच्चारणात्मिकेत्यत आह-अविलम्बेनेति। तदुपयोगितया = उपस्थितिजनकतया, उक्तं = 'पदानामविलम्बेनोच्चारण'मिति सन्निधिलक्षणावसरे मूल उक्तम्।

मूले- अन्यदिति। (पृ० १४०) अनाप्तोच्चरितम्। वाक्यार्थज्ञानं = वाक्यजन्यार्थप्रतीतिः, शाब्दज्ञानं = शाब्दबोधः,-'इत्युच्यते' इति शेषः। तत्करणं = शाब्दबोधकरणम्।

**वाक्यं द्विविधम्–वैदिकं, लौकिकं च। वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्। अन्यदप्रमाणम्। वाक्यार्थज्ञानं शाब्दज्ञानम्। तत्करणं शब्दः। ※ इति शब्दप्रमाणम् ※**

---

❀ न्यायबोधिनी ❀

**वैदिकमिति**। वेदवाक्यमित्यर्थः। इदमुपलक्षणं,—वेदमूलकस्मृत्यादीन्यपि ग्राह्याणि। **लौकिकं त्विति**। वेदवाक्यभिन्नमित्यर्थः। आप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम्॥ ५२॥

❀ इति न्यायबोधिन्यां शब्दपरिच्छेदः ❀

❀ दीपिका ❀

वाक्यं विभजते—**वाक्यमिति**। वैदिके विशेषमाह–**वैदिकमीश्वरोक्तत्वादिति**। ननु वेदस्यानादित्वात् कथमीश्वरोक्तत्वमिति चेन्न, 'वेदः पौरुषेयः, वाक्यसमूहत्वात्, भारतादिवत्' इत्यनुमानेन पौरुषेयत्वसिद्धेः, न च स्मर्यमाणकर्तृत्वमुपाधिः। गौतमा-

❀ परिमलः ❀

वेदस्यापौरुषेयत्वं वदतां मीमांसकानां मतं दूषयितुमुपन्यस्यति—**नन्विति**। वेदस्य पौरुषेयत्वं स्वाभिमतं नैयायिकः प्रदर्शयति–**वेद इति**। पौरुषेयः = ईश्वरोच्चरितः,

ननु 'अष्टादशपुराणानां कर्त्ता सत्यवतीसुत' इतिवद्वेदकर्त्तुरप्रसिद्धतया स्मर्यमाणकर्तृत्वमुपाधिः पौरुषेयत्वानुमाने, तथा च कथमिदमनुमानं पौरुषेयत्वसाधकं स्यादित्याशङ्कते–**न चेति**। **उपाधिरिति**। पौरुषेयत्व-

❀ दीपिका ❀

दिभिः शिष्यपरम्परया वेदेऽपि सकर्तृत्वस्मरणेन साधनव्यापकत्वात्, 'तस्मात् तपस्तेपानात् त्रयो वेदा अजायन्त' इति श्रुतेः।

ननु वर्णा नित्याः—'स एवायं गकारः' इति प्रत्यभिज्ञाबलात्, तथा च कथं वेदस्यानित्यत्वमिति चेन्न, 'उत्पन्नो गकारो, नष्टो गकारः' इत्यादिप्रतीत्या वर्णानामनित्यत्वात् 'सोऽयं गकार' इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाले'तिवत् जात्यालम्बनत्वात्। वर्णानां

❀ परिमलः ❀

रूपसाध्यव्यापकत्वात् वाक्यसमूहत्वरूपहेत्वव्यापकत्वाच्च[1] स्मर्यमाणकर्तृकत्वस्योपाधित्वं स्पष्टमेवेत्याशयः। **साधनव्यापकत्वादिति।** तथा च यत्र यत्र वाक्यसमूहत्वात्मको हेतुस्तत्र सर्वत्र स्मर्यमाणकर्तृकत्वस्य वर्त्तमानत्वात्साधनव्यापकत्वेन साधनाव्यापकत्वविरहान्नोपाधित्वमिति भावः। वेदस्यापि सकर्तृकत्वस्मरणे श्रुतिं प्रमाणयति—**तस्मादिति।** तपस्तेपानात् = तपश्चरणतत्त्वसाक्षात्कारिणः, तस्मात् = ब्रह्मणः, 'तेपाना'दिति 'तप्'धातोर्लिटि छान्दसत्वाच्छानचि एत्वाभ्यासलोपयोः सिध्यति।

**स एवायमिति।** इदानीन्तने गकारे पूर्वकालोच्चरितगकाराभेदानुभवस्य वर्णानां नित्यत्व एवोपपादयितुं शक्यतया वर्णानां नित्यत्वमिति भावः। **जात्यालम्बनत्वादिति।** गकारादेरनित्यत्वेऽपि कत्व-गत्वादिजातीनां नित्यतया तदाश्रयत्वसाम्यात्सोऽयं गकार इति प्रत्यभिज्ञानं,—दीपशिखाया अनित्यत्वेऽपि तद्गतजातेर्नित्यतया 'सेयं दीपज्वाले'ति वदुपपद्यत इति भावः।

वर्णानां नित्यत्वेऽपि—'अग्निमील' इत्यादिवेदस्याकारोत्तर-गकारोत्तर-

---

१. यत्र यत्र पौरुषेयत्वं तत्र सर्वत्र स्मर्यमाणकर्तृत्वसत्त्वात्साध्यव्यापकत्वं,—हेतुमति वेदेऽवर्त्तमानतया हेत्वव्यापकत्वञ्चोपाधौ।

❀ दीपिका ❀

नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्यानित्यत्वात् ,–तस्मादीश्वरोक्तो वेदः । मन्वादिस्मृतीनामाचाराणां च वेदमूलतकया प्रामाण्यम् , स्मृतिमूलवाक्यानामिदानीमनध्यानात् तन्मूलभूता काचित् शाखोच्छिन्नेति कल्प्यते ।

ननु पाठ्यमानवेदवाक्योत्सादस्य कल्पयितुमशक्यतया विप्रकीर्णवादस्यायुक्तत्वादिति नित्यानुमेयो वेदो मूलमिति चेन्न, तथापि वर्णानुपूर्वीज्ञानाभावेन बोधकत्वासम्भवात् ।

❀ परिमलः ❀

नकारोत्तरेकारस्वरूपानुपूर्वीविशेषविशिष्टवाक्यसमुदायात्मकस्य — अव्यवहितोत्तरक्षणवृत्तित्वरूपोत्तरत्वस्यानित्यक्षणघटिततया ]— अनित्यत्वादीश्वरस्य तत्कर्तृत्वमिति सिद्धं वेदस्य पौरुषेयत्वमिति भावः । आचाराणां = आचारबोधकशिष्टवाक्यानाम् । ननु तादृशस्मृत्यादिमूलभूतो वेदः कथमिदानीं नोपलभ्यत इत्यत आह–**स्मृतिमूलेति** । अनध्ययनात् = अध्ययनादेरुच्छिन्नत्वात्, तन्मूलभूता = मन्वादिस्मृत्यादिमूलभूता, शाखा = वेदभागविशेष एव, उच्छिन्ना = विलुप्ता, कल्प्यते = अनुमीयते । पठ्यमानवेदवाक्योत्सादस्य = पठनपाठनसम्प्रदायक्रमशुद्ध–प्रचलितवेदस्थकतिपयवाक्यविनाशस्य, **अशक्यतयेति** । अस्य–सम्प्रदायक्रमरक्षितत्वादनवरतं पठ्यमानत्वाच्चेदानीं प्रचलितवेदवाक्यविलोपो वक्तुमशक्य इति भावः । नन्विदानीं कियानंशो वेदस्य लुप्तः, कियांश्चोपलभ्यत इति वेदस्य मध्ये मध्ये वाक्यानां खण्डितत्वं कल्प्यते इत्यत आह–**विप्रकीर्णेति** । वेदस्येदानीं प्रचलितास्वपि शाखासु तत्तच्छाखान्तर्गतः कियानंशो लुप्त इति रीत्या वेदशाखानां खण्डितत्वकल्पनमयुक्तं, सम्प्रदायक्रमेण तथैव निरवच्छिन्नं पठ्यमानत्वादित्याशयः ।

विप्रकीर्णवादस्य = 'इदानीं मध्ये मध्ये विच्छिन्नो वेद' इति कल्पनस्य,

❀ दीपिका ❀

ननु 'एतानि पदानि स्मारितार्थसंसर्गवन्ति, आकाङ्क्षादिमत्पदकदम्बत्वात्, 'गामानय दण्डेनेति'मद्वाक्यव' दित्यनुमानादेव

❀ परिमलः ❀

अयम्भावः—'यदि वर्त्तमानशाखास्वेव प्रचलितेषु मन्त्रेषु कियानपि भागो नष्टः, कियानप्युपलभ्यते, एवञ्च यावान्भाग उपलभ्यते, तावतो भागस्य स्मृतिमूलतया कल्पनं, वेदस्य मध्ये विच्छिन्नत्वाच्च स्मृतिबोधितसकलार्थोपपादकत्वविरह इति न क्षति'रिति,—वेदस्यानित्यमेवायातं स्यात्, तदेव तु न, 'वेदस्य मध्ये मध्ये खण्डितत्व'मित्यस्यायुक्तत्वात्, सम्प्रदायक्रमेण तथैव स्मर्यमाणत्वात्, तथा च वेदोऽयं नित्य एव, न मध्ये विच्छिन्नत्वादनित्य इति वक्तुं शक्यते, किन्तु कश्चन प्रचलितवेदाद्भिन्नो वेद भाग एव विच्छिन्न इति तस्य नित्यस्य वेदभागस्यानुमानमिति **तथापीति**। अज्ञातस्य वेदस्य बोधकत्वासम्भवात्तादृशानुपूर्वीज्ञानस्यापिशाब्दधीहेतुत्वात्, अतएव नदीदीनादिशब्दैरर्थविशेषबोध इति भावः। एवञ्चानित्य एव वेद इति तत्त्वं।

शब्दस्य प्रामाण्यमस्वीकर्त्तुं वैशेषिकस्य मतं दूषयितुमुत्थापयति—**नन्विति**। एतानि पदानि = 'घटमानये'त्यादीनि, अर्थयोः संसर्गः,—अर्थसंसर्गः, स्मारितोऽर्थसंसर्गोऽस्त्येषां तानि—स्मारितार्थसंसर्गवन्ति = 'तात्पर्यविषय–स्मारित–पदार्थ-संसर्ग–प्रमापूर्वकाणि, अयम्भावः–'गौरस्ति'

---

१. 'ब्राह्मणे विधे'इत्यादौ यदाधिकरणत्वसंसर्गे तात्पर्यं तदा विषयत्वादिसंसर्गेणार्थान्तरवारणाय 'तात्पर्यविषयत्वं' संसर्गे निवेशितम्। तात्पर्यज्ञाने इतरपदार्थत्वेनेतरपदार्थस्य प्रवेशाद्घटत्वादिना स्मृतस्य संसर्गो न सिद्धेदतः—'स्मारिते'ति। स्मारितत्वञ्च—वृत्त्योपस्थापितत्वं, तेन वस्तुपदात्समवायेनाकाशत्वादिनोपस्थापितेन रूपेण संसर्गसिद्ध्यभावेऽपि न क्षतिः। आकाङ्क्षादिरहिते पदकदम्बके—'गौरश्वः पुरुषो हस्ती' 'अग्निना सिञ्चति' 'गिरिर्भुक्तमग्निमान्देवदत्तेने'त्यादौ व्यभिचारवारणाय हेता-'वाकाङ्क्षादी'ति।

❁ दीपिका ❁

संसर्गज्ञानसम्भवात्, शब्दो न प्रमाणान्तरमिति चेन्न, अनुमित्यपेक्षया शाब्दज्ञानस्य विलक्षणस्य 'शब्दात्प्रत्येमी'त्यनुव्यवसायसाक्षिकस्य सर्वसम्मतत्वात्।

नन्वर्थापत्तिरपि प्रमाणान्तरमस्ति, 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनमर्था-

❁ परिमलः ❁

'गामानये'त्याद्याकाङ्क्षादिमच्छब्देभ्यः स्वस्वशक्त्या पदार्थानां गवादीनामुपस्थित्यनन्तरं गवादावस्तित्वाद्यन्वयावगाही विलक्षणो बोधो—[शाब्दबोधाख्यो-]—भवति, तत्र न शब्दः प्रमाणं, 'गौरस्तितावान्, स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षादिमत्पदस्मारितत्वात्, घटव'दित्यनुमाना[1]देव शाब्दबोधसम्भवात्, शब्दस्य शाब्दबोधजनकत्वायोगादिति। संसर्गज्ञानसम्भवात् = शाब्दबोधापरपर्यायान्वयबोधसम्भवात्, प्रमाणान्तरम् अनुमानातिरिक्तं प्रमाणान्तरम्।

अनुमित्यपेक्षया विलक्षणस्य शाब्दज्ञानस्य [2]'शब्दात्प्रत्येमी'त्यनुव्यवसायसाक्षिकस्येत्यन्वयः। **सर्वसम्मतत्वादिति**। तथा च कार्यवैचित्र्यानुरोधाच्छब्दोऽतिरिक्तः प्रमाणमिति भावः।

मीमांसकमतेऽर्थापत्तेरपि प्रमाणतया तदकथनान्न्यूनतेत्याशङ्कते—**नन्विति**। प्रमाणान्तरं = प्रत्यक्षादिचतुष्टयप्रमाणातिरिक्तं, पीनः = स्थूलः, दिवा = अहनि, दृष्टे = प्रत्यक्षतोज्ञाते, श्रुते = शब्दादवधारिते,[3] पीनत्वस्य,

---

१. व्याप्तिज्ञानं विनाऽपि शाब्दबोधस्यानुभवसिद्धत्वात्, शब्दश्रवणान्तरं सर्वत्र नियमेन व्याप्तिज्ञाने प्रमाणाभावात्, किंच शाब्दस्थले यदि सर्वत्र व्याप्तिज्ञानं कल्प्यते, तदाऽनुमितिस्थले सर्वत्र पदाज्ञानं प्रकल्प्यशाब्दबोध एव किं नाद्रियत इति तु—**विश्वनाथभट्टाः**। २. न त्वनुमिनोमीत्यनुव्यवसायो भवति, येन शाब्दबोधस्यानुमितित्वं स्यात्। ३. एतेन दृष्टार्थापत्तिः, श्रुतार्थापत्तिश्चेत्यर्थापत्तिद्वैविध्यं सूचितम्।

❀ दीपिका ❀

पत्त्या कल्प्यत इति चेन्न । 'देवदत्तो रात्रौ भुङ्क्ते, दिवाऽभुञ्जानत्वे सति पीनत्वात्' इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात् ।

'शते पञ्चाश'दिति सम्भवोऽप्यनुमानमेव । 'इह वटे यक्षस्तिष्ठती' त्यैतिह्यमपि—अज्ञातमूलवक्तृकः शब्द एव ।

❀ परिमलः ❀

अन्यथा = रात्रिभोजनं विना, अनुपपत्त्या = असम्भवेन, अर्थापत्त्या = अर्थापत्त्याख्येन प्रमाणेन, उपपादकोपपाद्ययोरर्थापत्तिशब्दो वर्त्तते, अर्थस्य—रात्रिभोजनस्योपपादकस्य—आपत्तिर्यस्मादिति व्युत्पत्या उपपाद्यस्य, अर्थस्यापत्तिरिति व्युत्पत्त्या—अर्थस्य—रात्रिभोजनस्योपपादकस्यापत्तिर्ज्ञानमित्यर्थादुपपादकस्य बोधात् । उपपादकज्ञानं—(रात्रिभोजनज्ञानं) फलम्, उपपाद्यस्य—पीनत्वस्य ज्ञानं करणमिति विवेकः ।

देवदत्त इति । रात्रौ भुङ्क्ते = रात्रिभोजनवान्, अनुमानेन = व्यतिरेक्यनुमानेन, व्यतिरेकव्याप्तिश्च–'यत्र यत्र दिवाऽभुञ्जानत्वे सति पीनत्वाभावस्तत्र तत्र रात्रिभोजनवत्त्वाभाव' इति । 'यत्र यत्र दिवाऽभुञ्जानत्वे सति पीनत्वं तत्र तत्र रात्रिभोजित्व' मित्यन्वयव्याप्तिस्तु नात्र वक्तुं शक्यते, योगिनि व्यभिचारात्, अतो व्यतिरेकानुमानमेवात्रोपन्यस्तमित्याशयः ।

सम्भवैतिह्ययोरपि प्रमाणत्वं वदतां पौराणिकानां मतं दूषयति–शत इति । 'शतरूप्यकवा'नित्युक्ते 'पञ्चाशद्रूप्यकवा' नित्येवं ज्ञानमपि सम्भवति, तस्यायं पञ्चाशद्वान् शतवत्त्वादित्यनुमानेनैव निर्वाहान्न सम्भवः प्रमाणान्तरं, शतस्य पञ्चाशद्व्याप्यत्वादित्याशयः ।

ऐतिह्यस्य–('किंवदन्ती'ति प्रसिद्धस्य) प्रमाणान्तरत्वं निरस्यति–इहेति । विशिष्य–अनिश्चितप्रथमवक्तृकः, शब्द एवेति । तथा च तस्य शब्दस्य यथार्थत्वे शब्दाख्यप्रमाण एवान्तर्भावादैतिह्यं न प्रमाणान्तरम्, अयथार्थत्वे तु तस्याप्रामाण्यमिष्टमेवेत्याशयः । नन्वनया चेष्टयाऽयमर्थो

❀ दीपिका ❀

चेष्टापि,—शब्दानुमानद्वारा व्यवहारहेतु'रिति–न मानान्तरम्, तस्मात्—प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानि ।

ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतोग्राह्यं, परतो वेति विचार्यते । तत्र विप्रतिपत्तिः,–'ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं, न वा, अत्र विधिकोटिः–स्वतस्त्वम्, निषेधकोटिः–परतस्त्वम् ।

❀ परिमलः ❀

बोद्धव्य इति संकेतितचेष्टयाऽर्थबोधाच्चेष्टायाः प्रमाणत्वमिति मतं निरस्यति–**चेष्टापीति। शब्दानुमानेति।** चेष्टाबोधकशब्दप्रमाणेन, अनुमानेन वेत्यर्थः । व्यवहारहेतुः = प्रमात्मकज्ञानहेतुः ।

❀ इति शब्दखण्डम् ❀

---

❀ अथ प्रामाण्यवादः ❀

**स्वतोग्राह्यमिति ।** 'स्वाश्रयज्ञानविषयकज्ञानजनकसामग्रीग्राह्यमित्यर्थः । परतोग्राह्यं = अनुमानादिग्राह्यं, विचार्यते = विजिगीषोः कथा प्रदर्श्यते, मध्यस्थसंशयप्रयोजिकां विप्रतिपत्तिमाह–**ज्ञानप्रामाण्यमिति ।** ज्ञाननिष्ठं 'तद्वति तत्प्रकारकत्व'मित्यर्थः, **तदप्रामाण्येति ।** तस्मिन्—प्राथमिके घटादिज्ञाने, यदप्रामाण्यं, तदग्राहिका, या यावज्ज्ञानग्राहिका सामग्री, तद्ग्राह्यमित्यर्थः । **विधिकोटिरिति ।** 'मीमांसकाना'मित्यादिः,

---

१ स्वं = प्रमात्वं, तदाश्रयीभूतं ज्ञानं—व्यवसायात्मकं प्राथमिकं घटादिज्ञानं, तद्विषयकं ज्ञानम्—अनुव्यवसायादिकं, तज्जनिका या सामग्री—आत्ममनःसंयोगादिघटिताऽनुव्यवसायादिसामग्री, तज्जन्यग्रहविषयत्वं—प्रमात्व—इति प्रमात्वस्य स्वतोग्राह्यत्वं बोध्यम् ।

❀ दीपिका ❀

अनुमानग्राह्यत्वेन सिद्धसाधनवारणाय—यावदिति । 'इदं ज्ञानमप्रमा' इति ज्ञानेन प्रामाण्याग्रहाद्बाधवारणाय—अप्रामाण्याग्राहकेति । 'इदं ज्ञानमप्रमा' इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्याप्रामाण्याग्राहकत्वाभावात् स्वतस्त्वं न स्यादतः—

❀ परिमलः ❀

स्वतस्त्वं—स्वतोग्राह्यत्वं, निषेधकोटिरिति । 'नैयायिकाना'मित्यादिः । परतस्त्वम्, = अनुमानादिग्राह्यत्वम्, अनुमानेति । 'घटादिज्ञानं प्रमे'त्याकारकयत्किञ्चिदनुमितिसामग्रीग्राह्यत्वेनेत्यर्थः । सिद्धसाधनवारणाय = तादृशानुमितिविषयताया मीमांसकनैयायिकोभयवादिसिद्धायाः प्रमात्वे सत्त्वेन प्रसक्तस्य सिद्धसाधनस्य वारणाय ।

यावदितीति । 'चरमग्रहविशेषण'मिति पूरणीयम् । तथा च यावद्ग्रहान्तर्गतानुव्यवसायविषयतायाः प्रमात्वे नैयायिकैरनभ्युपगमान्न सिद्धसाधनमिति भावः । इदं ज्ञानमिति । घटादिज्ञानमित्यर्थः । अप्रमा = तदभाववति तत्प्रकारकं ज्ञानम्, प्रामाण्याग्रहात् = प्रमात्वे निरुक्तानुव्यवसायादिसामग्रीजन्यग्रहविषयत्वस्यासत्त्वात्, बाधवारणाय = मीमांसकनये बाधवारणाय, अप्रामाण्याग्राहकेतीति । तथा च निरुक्तज्ञानग्राहकसामग्र्या अप्रामाण्याग्राहकत्वाभावेन तस्या धर्त्तुमशक्यतया न बाध इति भावः । इदं ज्ञानमिति । घटादौ पटत्वादिप्रकारकं ज्ञानमित्यर्थः । अप्रमा = तदभाववति तत्प्रकारकं ज्ञानम्, इतीत्यादि । इत्याकारको योऽनुव्यवसायः, तन्निष्ठं यत्—अप्रमात्वप्रामाण्यं, तद्ग्राहकस्य—तज्ज्ञानजनकीभूतायाः सामग्र्याः—अप्रमात्वप्रकारकज्ञाननिष्ठतत्प्रमात्वग्राहकत्वादित्यर्थः, न स्यादिति । तथा चाप्रामाण्याग्राहिकाया यावज्ज्ञानग्राहिकायाः सामग्र्याः एवाप्रसिद्धिः, अप्रमात्ववति अप्रमात्वग्राहिकायाः सामग्र्या निरुक्तप्रमात्वघटकाऽप्रमात्वरूपविशेषणग्राहकत्वादिति भावः ।

❀ दीपिका ❀

**—तदिति।** तस्मिन्=ग्राह्यप्रामाण्याश्रयेऽप्रामाण्याग्राहकेत्यर्थः। उदाहृतस्थले व्यवसायेऽप्रामाण्यग्राहकस्याप्यनुव्यवसाये तदग्राहकत्वात्स्वतस्त्वसिद्धिः।

ननु स्वत एव प्रामाण्यं गृह्यते, 'घटमहं जानामी'त्यनुव्यवसायेन घटघटत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणात्,—व्यवसायरूपप्रत्यासत्तेस्तुल्यत्वात्, पुरोवर्तिनि प्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वादिति चेन्न, स्वतः प्रमाण्यग्रहे 'जलज्ञानं प्रमा न वे'

❀ परिमलः ❀

ग्राह्यप्रामाण्याश्रये=अनुव्यवसायज्ञानविषयीभूतप्रमात्ववति प्रथमज्ञाने, **अप्रामाण्येति।** तादृशे प्राथमिके 'शुक्ताविदं रजत'मिति ज्ञाने यदप्रामाण्यं, तदग्राहकेत्यर्थ—इत्यर्थः। उक्तस्थले='इदं ज्ञानमप्रमे'त्यादिरीत्या प्रदर्शितस्थले, व्यवसाये='शुक्ताविदं रजत'मिति ज्ञाने, अप्रामाण्यग्राहकस्य=अप्रामाण्यज्ञानजनकस्य, अनुव्यवसाये='शुक्ताविदं रजतमित्याकारकं ज्ञानमप्रमे'त्याकारके ज्ञाने, तदग्राहकत्वात्=अप्रामाण्याग्राहकत्वात्, स्वतस्त्वसिद्धिः=स्वतोग्राह्यत्वसिद्धिः।

**नन्विति।** अयम्भावः—घट–घटत्वयोस्तदीयसमवायसम्बन्धस्य च यदि—'घटमहं जानामी'त्यनुव्यवसायविषयत्वं, तदा प्रमात्वस्यापि घटज्ञाननिष्ठस्य तादृशानुव्यवसायविषयत्वमङ्गीकर्त्तव्यमेव, व्यवसायवृत्तीनां यावतामेवानुव्यवसायविषयत्वात्, पूर्ववर्त्तिवस्तुनि [1]प्रकारसम्बन्धविषयकत्वस्यैव प्रमात्वेनाङ्गीकर्त्तव्यता स्वतोग्राह्यत्वं मीमांसकमतसिद्धमेव समीचीनमित्याक्षेपकर्त्तुराशय इति।

**समाधत्ते—नेति।** अयम्भावः—यदा बालस्यापूर्वं जलज्ञानं जातं,

१ घटत्वादीनां घटे यः समवायादिः सम्बन्धः स एव प्रकारसम्बन्धः।

❀ दीपिका ❀

त्यनभ्यासदशायां प्रमात्वसंशयो न स्यात्, अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात्,-तस्मात् स्वतोग्राह्यत्वाभावात्-परतोग्राह्यत्वम्। तथा हि—प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे सति 'पूर्वोत्पन्नं ज्ञानं प्रमा, समर्थप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं, यथा—अप्रमा' इति व्यतिरेकिणा प्रमात्वं निश्चीयते। द्वितीयादि-

❀ परिमलः ❀

तदा यदि जलत्ववति जलत्वप्रकारकत्वमपि तत्रानुव्यवसायेन निश्चितं भवेत्तदोत्तरकालं सर्वानुभवसिद्धः प्रमात्वसंशयो न स्यात्, तादृशसंशयविरोधिनः प्रमात्वनिश्चयस्यैव विद्यमानत्वात्, अतः प्रमात्वं निरुक्तानुव्यवसायेन न गृह्यत इति स्वीकार्यमिति। अनभ्यासदशायां = प्राथमिकजलज्ञानग्रहोत्तरकाले।

उपसंहरति—**तस्मादिति**। नैयायिकमतसिद्धं परतो ग्राह्यत्वमुपपादयति—**तथा हीति**। प्रथमम् = अनभ्यासदशायां, जलज्ञानानन्तरं = जलज्ञानोत्तरं प्रवृत्तौ जातायां—सत्यां, जललाभे = जलप्राप्तौ सत्यां, **पूर्वोत्पन्नमिति**। अनभ्यासदशोत्पन्नमित्यर्थः। प्रमा = जलत्ववति जलत्वप्रकारकं, समर्थप्रवृत्तिजनकत्वात् = जललाभानुकूलप्रवृत्तिजनकत्वात्—व्यतिरेकिदृष्टान्त'माह—यन्नेति, यन्न प्रमा, तन्न समर्थप्रवृत्तिजनकम्, **अप्रमेति**। तथा च यथाऽप्रमा न समर्थप्रवृत्तिजनिका, तथा पूर्वोक्तजलज्ञानस्य समर्थप्रवृत्तिजनकतया नाऽप्रमात्वमपि तु प्रमात्वमित्याशयः।

द्वितीयादिजलज्ञानेऽन्वयव्यतिरेकिणाऽपि हेतुना प्रमात्वनिश्चयः सम्भवतीत्याह—**द्वितीयेति**। प्राथमिकजलज्ञानानन्तरोत्पन्नजलज्ञान इत्यर्थः। अयमाशयः "—'द्वितीयादि जलज्ञानं प्रमा, समर्थप्रवृत्तिजनकत्वात्, प्राथमिकजलज्ञानव'दित्यन्वयदृष्टान्तबलेनापि द्वितीयादिजलज्ञाने प्रमात्वनिश्चय—" इति। तत्सजातीयत्वलिङ्गेन = प्रथमजलज्ञानवृत्ति यत्समर्थ-

❀ दीपिका ❀

ज्ञानेषु पूर्वज्ञानदृष्टान्तेन तत्सजातीयत्वलिङ्गेनान्वयव्यतिरेकिणापि गृह्यते।

प्रमाया गुणजन्यत्वमुत्पत्तौ—परतस्त्वं, प्रमाऽसाधारणकारणं गुणः, अप्रमाऽसाधारणकारणं दोषः। तत्र प्रत्यक्षे विशेषणवद्विशेष्य-सन्निकर्षो गुणः। अनुमितौ व्यापकवति व्याप्यज्ञानम्, उपमितौ यथार्थसादृश्यज्ञानम्, शाब्दज्ञाने यथार्थयोग्यताज्ञानम्,—इत्याद्यूहनीयम्। पुरोवर्तिनि प्रकाराभावस्यानुव्यवसायेनानुपस्थितत्वादप्रमात्वं परत एव गृह्यते। पित्तादिदोषजन्यत्वमुत्पत्तौ परतस्त्वम्।

ननु सर्वेषां ज्ञानानां यथार्थत्वादयथार्थज्ञानमेव नास्तीति।

❀ परिमलः ❀

प्रवृत्तिजनकत्वं, तद्वता लिङ्गेन, अन्वयव्यतिरेकिणा = अन्वय—व्यतिरेक—व्याप्तिमता, **गृह्यत इति**। 'प्रमात्व'मिति शेषः। प्रमाया उत्पत्तौ परतस्त्वमाह—**प्रमाया इति**। प्रमाऽसाधारणकारणं = प्रमात्वावच्छिन्नोत्पादकं कारणम्, एवमग्रेऽपि, प्रत्यक्षादिप्रमाजनकगुणान्प्रदर्शयति—**तत्रेति**। विशेषणवद्विशेष्यसन्निकर्षः = घटत्वादिमद्घटादिनिष्ठः संयोगादिरूपः सन्निकर्षः, व्यापकवति = साध्यवति, व्याप्यज्ञानं = व्याप्यप्रकारकं, परामर्श इति यावत्, यथार्थसादृश्यज्ञानं = प्रमात्मकं यद्गवयादिनिष्ठं गवादिसादृश्यज्ञानं, यथार्थयोग्यताज्ञानं = प्रमात्मकम् एकपदार्थेऽपरपदार्थवत्ताज्ञानं, **पूर्ववर्त्तिनीति**। शुक्त्यादावित्यर्थः, प्रकाराभावस्य = रजतत्वाद्यभावस्य, अनुव्यवसायेन = अनुव्यवसायसामग्र्या, अनुपस्थितत्वात् = अग्राह्यत्वात्। अप्रमात्वग्राहकसामग्रीमाह—**पित्तादीति**। आदिपदान्मण्डूकवसाञ्जनादिपरिग्रहः, तथाचाऽप्रमात्वोत्पत्तिः पित्तादिदोषजन्यैवेति अप्रमात्वोत्पत्तिरपि परतो ग्राह्यैवेत्याशयः।

प्रभाकरः शङ्कते—**नन्विति**। अयम्भावः—'इदं रजत'मिति शुक्ति-

❀ दीपिका ❀

न च 'शुक्ताविदं रजतम्' इति ज्ञानात् प्रवृत्तिदर्शनादन्यथाख्यातिसिद्धिरिति वाच्यम्, रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिसम्भवात्, उपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन 'नेदं रजतम्' इत्यादावतिप्रसङ्गाभावादिति चेत्, न सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात् ।

❀ परिमलः ❀

विशेष्यकं रजतत्वप्रकारकं ज्ञानं नैकम्, अपि तु तत्र रजतत्वस्य स्मरणं, शुक्त्यादेः प्रत्यक्षमिति ज्ञानद्वयात्मकमेव, तथा च द्वयोरपि प्रमात्मकतया भ्रमज्ञानमेव नास्तीति—अप्रमात्वोत्पत्तिसामग्रीकल्पनं वृथैवेति । अन्यथाख्यातिसिद्धिः = भ्रमात्मकज्ञानसिद्धिः ।

**रजतेति** । तथा च रजतस्मृतिशुक्तिप्रत्यक्षाभ्यां शुक्तौ रजताऽभेदावगाहिभ्यामित्यर्थः । प्रवृत्तिसम्भवात् = रजतार्थिप्रवृत्तिसम्भवात्, प्रभाकरमते लाघवमाह—**उपस्थितेष्टेति** । उपस्थितस्य = स्मृतिविषयीभूतस्य, इष्टस्य = रजतादेः, योऽभेदग्रहः तस्यैव सत्याऽसत्यप्रवृत्तिजनकत्वेनेत्यर्थः । **अतिप्रसङ्गाभावादिति** । तथा च तादृशाभेदग्रहस्य प्रवर्त्तकत्वकल्पना 'नेदं रजत'मित्याकारकभेदग्रहस्थले न प्रवृत्तिः, तादृशभेदग्रहस्यैवाऽभेदग्रहप्रतिबन्धकतया भेदग्रहकालेऽभेदग्रहो न सम्भवतीत्याशयः ।

नैयायिकः समाधत्ते—**सत्येति** । अयम्भावः—यदि रजतत्वविशिष्टरजतविषयकप्रवृत्तौ रजतत्वविशिष्टरजतविषयकज्ञानस्य कारणत्वं क्लृप्तं, तदाऽसत्यरजतस्थलेऽपि लाघवाद्रजतत्वविशिष्टं ज्ञानमेव प्रवर्त्तकतया कल्पनीयम्, न चाननुगमः,—रजतविषयकप्रवृत्तौ रजतत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिज्ञानत्वेनैकरूपेणानुगमसम्भवात्, तथा च ज्ञानद्वयं नाङ्गीकरणीयम्, एकज्ञानस्वीकारे च स्वीकारः स्यादन्यथाख्यातेरिति ।

अयथार्थस्त्रिविधः—संशय-विपर्यय-तर्कभेदात् । एक-स्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानं-संशयः । यथा

❁ न्यायबोधिनी ❁

यथार्थानुभवं निरूप्यायथार्थानुभवं विभजते—एकेति । एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारकज्ञानं संशय इत्यर्थः । भावद्वय-

❁ दीपिका ❁

अयथार्थानुभवं विभजते—अयथार्थ इति । स्वप्नस्य मानसविपर्ययरूपत्वान्न त्रैविध्यविरोधः । संशयलक्षणमाह—एकेति । 'घटपटा'विति समूहालम्बनेऽतिव्याप्तिवारणाय—एकेति । 'घटो

❁ परिमलः ❁

नन्वयथार्थाऽनुभवस्य त्रैविध्यं कथम् ? अनुभूतपदार्थस्मरणादिजन्यस्य असद्वस्तुविषयकस्य स्वप्नज्ञानस्याप्ययथार्थज्ञानत्वादत आह—**स्वप्नस्येति** । स्वप्नज्ञानस्येत्यर्थः, यथाश्रुतं तु न सम्यक्, प्रदेशविशेषावच्छिन्नमनःसंयोगात्मकस्य स्वप्नस्य ज्ञानत्वविरहात्, मानसविपर्ययरूपत्वात् = मनोजन्यमिथ्याज्ञानरूपत्वात्, एवञ्च मिथ्याज्ञानेऽन्तर्भावान्नाधिक्यमिति भावः ।

**एकेतीति** । एकधर्मिनिष्ठविशेष्यतानिरूपकत्वे सति विरुद्ध-नानाधर्मप्रकारकत्वे च सति ज्ञानत्वं संशयलक्षणं, 'स्थाणुर्वे'त्यादौ—पुरोवर्त्तिवस्तुरूपैकधर्मिविशेष्यकत्वात्स्थाणुत्व-स्थाणुत्वाभावादिरूपविरुद्धनानाधर्मप्रकारकज्ञानत्वाल्लक्षणसमन्वयः ।

**समूहालम्बन इति** । 'विरुद्धनानाधर्मप्रकारकत्वे सति ज्ञानत्व'-मित्येतावदुक्तौ—घटत्व—पटत्वरूपनानाधर्मप्रकारकज्ञानत्वस्य समूहालम्बनात्मके 'घटपटा'वितिज्ञानेऽपि सत्त्वादतिव्याप्तिः, 'एकधर्मिविशेष्यकत्वे सती'त्युक्तौ तु निरुक्तसमूहालम्बनज्ञानस्य घट-पटात्मकधर्मिद्वयविशेष्यकत्वेनैकधर्मिविशेष्यकत्वाभावान्न दोष इत्याशयः । **घटो द्रव्यमिति** ।

'स्थाणुर्वा पुरुषो वे'ति। मिथ्याज्ञानं विपर्ययः,–यथा शुक्तौ इदं रजतमिति। व्याप्यारोपेण व्यापकारोपस्तर्कः। यथा

❀ न्यायबोधिनी ❀

कोटिकसंशयाप्रसिद्धेः 'स्थाणुर्वे'त्यत्र स्थाणुत्व-स्थाणुत्वाभाव-पुरुषत्व-पुरुषत्वाभावकोटिक एव संशय इत्यर्थः॥ ५२॥

**मिथ्याज्ञानमिति**। अयथार्थज्ञानमित्यर्थः। विपर्ययो नाम भ्रमः।

**व्याप्यारोपेणेति**। तर्के व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणं,

❀ दीपिका ❀

द्रव्यम्' इत्यादावतिव्याप्तिवारणाय—**विरुद्धेति**। 'पटत्वविरुद्धघटत्ववान्' इत्यत्रातिव्याप्तिवारणाय–**नानेति**। विपर्ययलक्षणमाह—**मिथ्येति**। तदभाववति तत्प्रकारकनिश्चय इत्यर्थः। तर्कलक्षणमाह—**व्याप्येति**। यद्यपि तर्को विपर्ययेऽन्तर्भवति, तथापि

❀ परिमलः ❀

घटरूपैकधर्मिविशेष्यक-घटत्वद्रव्यत्वरूपनानाधर्मप्रकारकज्ञानत्वस्य 'घटो द्रव्य'मित्यत्र सत्त्वादतिव्याप्तिः स्यात्, 'विरुद्धे'त्युक्तौ तु घटत्व–द्रव्यत्वयोर्विरोधाभावान्न दोषः।

'एकधर्मिविशेष्यकविरुद्धधर्मप्रकारकज्ञानत्व'मात्रोक्तौ— घटरूपैकधर्मिविशेष्यक–पटत्वविरुद्धघटत्वरूप–विरुद्धधर्मप्रकारकज्ञानत्वस्य सत्त्वा'त्पटत्वविरुद्धघटत्ववान् घट' इत्यत्रातिव्याप्तिः स्यादतो '**नाने**'ति। घटत्वरूपैकधर्मप्रकारकतया — एकधर्मिनिष्ठविशेष्यतानिरूपितविरुद्धनानाधर्मप्रकारकज्ञानत्वाभावान्न दोष इत्याशयः।

**तदभाववतीति**। तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वे च सति ज्ञानत्वमित्यर्थः। रजतत्वाभाववच्छुक्तिविशेष्यकत्वे सति रजतत्वप्रकारकज्ञानत्वाच्छुक्ता'विदं रजत'मिति ज्ञाने लक्षणसमन्वयः।

**व्याप्येतीति**। आहार्यव्याप्यवत्ताभ्रमजन्याहार्यव्यापकवत्ताभ्रमत्वं—

—'यदि वह्निर्न स्यात् तर्हि धूमोपि न स्या'दिति ॥ ५३ ॥

स्मृतिरपि द्विधा—यथार्थाऽयथार्था चेति। प्रमाजन्या–यथार्था । अप्रमाजन्या—अयथार्था ॥५४॥

❀ न्यायबोधिनी ❀

अन्यथा बाधनिश्चयाभावे इष्टापत्तिदोषेण तर्कानुत्पत्तेः ।

❀ दीपिका ❀

——प्रमाणानुग्राहकत्वात् भेदेन कीर्तनम् ।

स्मृतिं विभजते—स्मृतिरिति ।

❀ परिमलः ❀

तर्कलक्षणं, व्याप्यभ्रमः—'यदि वह्न्यभाववान् स्या'दिति, तज्जन्यो व्यापक-भ्रमः—'तदा धूमाभाववानस्या'दिति, तथा च यदि वह्निर्न स्यादित्यादौ लक्षणसमन्वयः स्पष्ट एवेति भावः। अप्रयोजकत्वशङ्कानिवृत्तये च तर्क–आवश्यकः, अन्यथा 'पर्वते धूमोऽस्तु वह्निर्मास्त्वि'त्यप्रयोजकत्वशङ्कया धूमेन वह्नेरनुमितिर्न स्यात्, तथा च वह्निधूमयोः कार्यकारणभावभङ्गप्रसङ्गरूपः—'यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्या'दित्ययं तर्कोऽप्रयोजकत्वशङ्कां निवर्त्त-यतीति तत्त्वम्। विपर्यये = मानसमिथ्याज्ञाने, प्रमाणानुग्राहकत्वात् = प्रमाणेनानुमानादिना प्रमाज्ञाने जननीये व्याप्तिनिश्चयप्रतिबन्धक——व्यभिचारशङ्का—विघटनद्वारोपयोगित्वात्, भेदेन = तर्कत्वेन रूपेण । कीर्त्तनं = कथनम् ।

एवं चतुर्विधमनुभवं निरूप्य स्मृतिं निरूपयति—स्मृतिरिति । यथार्थस्मृतिं लक्षयति—प्रमाजन्येति । एवञ्च प्रमाजन्यत्वे सति स्मृतित्वं यथार्थस्मृतेर्लक्षणं निष्पन्नम्। एवमप्रमाजन्यत्वे सति स्मृतित्वमयथार्थ-

**सर्वेषामनुकूलवेदनीयं सुखम् ॥५५॥**

**प्रतिकूलवेदनीयं दुःखम् ॥५६॥**

**इच्छा–कामः ॥५७॥ क्रोधो–द्वेषः ॥५८॥**

❀ न्यायबोधिनी ❀

सुखं निरूपयति—**सर्वेषामिति** । इतरेच्छाऽनधीनेच्छाविषयत्वमिति निष्कर्षः । यथाश्रुते'घटोऽनुकूल' इत्याकारकज्ञानदशायामनुकूलत्वप्रकारकज्ञानविशेष्यत्वस्य घटादावपि सत्त्वाद्घटादावतिव्याप्तिरिति । सुखेच्छाधीने भोजनादावतिव्याप्तिवारणाय 'इतरेच्छानधीने'तीच्छाविशेषणम् । सुखेच्छायाः सुखत्वप्रकारकज्ञानमात्रजन्यत्वात् ॥ ५५ ॥

दुःखं निरूपयति—**प्रतिकूलेति** । अत्रापीतरद्वेषानधीनद्वेषविषयत्वमिति निष्कृष्टलक्षणम् । 'द्वेषविषयत्व'मात्रोक्तौ सर्पादावतिव्याप्तिस्तत्रापि द्वेषविषयत्वसत्त्वादतस्तत्रातिव्याप्तिवारणायेतरद्वेषानधीनेति द्वेषविशेषणम् । सर्पजन्यदुःखादौ द्वेषात्सर्पेऽपि द्वेष इति सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वादन्यद्वेषाजन्यद्वेषविषयत्वरूपदुःखलक्षणस्य सर्पादौ नातिव्याप्तिः। फलेच्छा उपायेच्छां प्रति कारणम्, अतः फलेच्छावशादुपायेच्छा भवति, एवं फले द्वेषादुपाये द्वेषः ।

❀ दीपिका ❀

सुखं लक्षयति—**सर्वेषामिति**। 'सुख्यहम्' इत्याद्यनुव्यवसायगम्यं सुखत्वादिकमेव लक्षणम्, यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम्।

❀ परिमलः ❀

स्मृतिलक्षणं बोध्यम्। **सुखमिति** । सर्वात्मसमवेता–ऽनुकूलत्वप्रकारकज्ञान–विषयत्वं सुखस्य लक्षणमित्यर्थः । मूलोक्तसुखलक्षणस्य विषयोपभोगादिसुखेऽव्याप्तिः, तत्त्वदर्शिनां तत्रानुकूलवेदनीयत्वाभावादत आह—**सुखत्वादिकमेवेति** । सुखत्वे प्रमाणं दर्शयति—'अनुव्यवसायगम्य'मिति । यथाश्रुतं = मूलोक्तम् । मूले—**दुःखमिति** । सर्वात्मसमवेत–

कृतिः–प्रयत्नः ॥५९॥ विहितकर्मजन्यो–धर्मः ॥६०॥ निषिद्धकर्मजन्योऽधर्मः ॥ ६१ ॥

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छा-प्रयत्ना–नित्या अनित्याश्च । नित्या–ईश्वरस्य, अनित्या–जीवस्य ॥ ६२ ॥

संस्कारस्त्रिविधः–वेगो, भावना, स्थितिस्थापकश्चेति । वेगः–पृथिव्यादिचतुष्टयमनोमात्रवृत्तिः ।

अनुभवजन्या स्मृतिहेतुर्भावना, आत्ममात्रवृत्तिः ।

❀ न्यायबोधिनी ❀

धर्माधर्मौ निरूपयति—**विहितेति** । वेदविहितेत्यर्थः । **निषिद्धेति** । वेदनिषिद्धेत्यर्थः ।

**बुद्ध्यादयोऽष्टाविति** । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा इत्यर्थः ।

संस्कारं विभजते—**संस्कार इति** । भावनां लक्षयति–**अनुभवेति** । 'अनुभवजन्यत्वे सति स्मृतिहेतुत्वं' भावनाया लक्षणम् । अत्रा'नुभव-जन्यत्वे सती'ति विशेषणानुपादाने—आत्ममनःसंयोगेऽतिव्याप्तिरात्म-मनःसंयोगस्य ज्ञानमात्रं प्रत्यसमवायिकारणत्वेन स्मृतिं प्रत्यपि कारणत्वाद-तस्तदुपादानम् । आत्ममनःसंयोगस्यानुभवजन्यत्वाभावान्नातिव्याप्तिः । ताव-न्मात्रे कृतेऽनुभवध्वंसेऽतिव्याप्तिः, ध्वंसं प्रति प्रतियोगिनः कारणत्वे-नानुभवध्वंसस्याप्यनुभवजन्यत्वात्, अतः 'स्मृतिहेतुत्वो'पादानम्, अनुभव-ध्वंसे स्मृतिहेतुत्वाभावान्नातिव्याप्तिः ।

❀ दीपिका ❀

संस्कारं विभजते—**संस्कार इति** । संस्कारत्वजातिमान्–संस्कारः, वेगस्याश्रयमाह—**वेग इति** । वेगत्वजातिमान्–वेगः ।

❀ न्यायबोधिनी ❀

ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणता सकलतान्त्रिकमतसिद्धा, यथा दण्डविशिष्टबुद्धिं प्रति दण्डज्ञानं कारणम्, दण्डविशिष्टबुद्धिर्नाम—दण्डप्रकारकबुद्धिः। तथा च दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति दण्डज्ञानत्वेन कारणत्वमित्यापतितम्, दण्डप्रकारकबुद्धिः—'दण्डी पुरुष' इत्याकारकबुद्धिस्तत्र दण्डज्ञानं कारणम्, न हि दण्डमजानानः पुमान् 'दण्डी पुरुष' इति प्रत्येति। एवं च यत्रायं दण्ड इति प्रत्यक्षं जातं तदनन्तरं 'दण्डी पुरुष' इत्याकारकप्रत्यक्षमुत्पन्नं, तत्र 'दण्डी पुरुष' इत्याकारकप्रत्यक्षेऽतिव्याप्तिः, तद्धि स्वाव्यवहितपूर्वक्षणोत्पन्नदण्डज्ञानात्मकानुभवजन्यं, जनिष्यमाणे 'दण्डी पुरुष' इत्याकारकस्मरणे कारणं च, स्मृतिं प्रत्यनुभवस्य कारणत्वात्तथा चानुभवजन्यत्वे सति स्मृतिहेतुत्वरूपभावनालक्षणस्य यथोक्त'दण्डी पुरुष' इत्याकारकानुभवे विद्यमानत्वादतिव्याप्तिरिति चेत्,—अत्र ब्रूमः—अनुभवजन्यत्वं हि अनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वम्, तत्र कारणतायामनुभवत्वावच्छिन्नत्वं निवेश्यते, तथा चानुभवत्वावच्छिन्नकारणतानिरूपिताकार्यताश्रयत्वमनुभवजन्यत्वमिति फलितम्, अतो नोक्तातिव्याप्तिः, तथा हि दण्डप्रकारकबुद्धित्वावच्छिन्नकार्यतानिरूपितदण्डज्ञाननिष्ठा या कारणता तस्या न दण्डानुभवत्वमवच्छेदकं दण्डानुभवादिव दण्डस्मरणादपि दण्डप्रकारकबुद्धे रुत्पत्तेः, अतो दण्डप्रकारकबुद्धित्वावच्छिन्नं प्रति अनुभवस्मरणसाधारणदण्डज्ञानत्वेनैव दण्डज्ञानस्य कारणतायाः स्वीकरणीयत्वेन दण्डज्ञानत्वस्यैव तदवच्छेदकत्वात्, तथा चानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्योक्तप्रत्यक्षेऽभावान्नातिव्याप्तिः। भावनायां तु लक्षणमिदं वर्त्तते, तथा हि,—अनुभवेनैव भावनाख्यसंस्कारोत्पत्त्या भावनात्वावच्छिन्नं प्रत्यनुभवत्वेनैव कारणतया,—भावनात्वावच्छिन्नकार्यतानिरूपितानुभवनिष्ठकारणतायामनुभवत्वमवच्छेदकम्,—अतोऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वं भावानायां वर्तत इति नासम्भवः।

❀ न्यायबोधिनी ❀

नन्वेवं 'स्मृतिहेतुत्व'विशेषणवैयर्थ्यम्, तद्धयनुभवध्वंसेऽतिव्याप्तिवारणाय प्रागुपात्तम्। न हि यथोक्तानुभवजन्यत्वविवक्षायामनुभवध्वंसेऽतिव्याप्तिः प्रसज्यते। तथा हि,—ध्वंसत्वावच्छिन्नं प्रति प्रतियोगिनः कारणत्वं प्रतियोगित्वेन रूपेण, तत्तद्ध्वंसत्वावच्छिन्नं प्रति च तत्तत्प्रतियोगिव्यक्तेस्तत्तद्व्यक्तित्वेनेत्येवं ध्वंसप्रतियोगिनोः कार्यकारणभावः। तथा च ध्वंसनिष्ठकार्यतानिरूपिता याऽनुभवनिष्ठा कारणता, तस्यां प्रतियोगित्वमवच्छेदकं, तत्तद्व्यक्तित्वं च, न त्वनुभवत्वमपीत्यनुभवध्वंसेऽनुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वरूपानुभवजन्यत्वविरहेणैवातिव्याप्तिवारणसम्भवात्कृतं स्मृतिहेतुत्वविशेषणेनेति चेन्न,।

स्मृतावतिव्याप्तिवारणायैव तदुपादानात्, तथा हि,—स्मृतिं प्रत्यनुभव एव कारणं, न तु स्मृतिरप्यतो घटस्मृतित्वावच्छिन्नं प्रति घटानुभवस्य घटानुभवत्वेनैव कारणत्वं, न तु घटज्ञानत्वेन, तथा च घटस्मृतिनिष्ठकार्यतानिरूपिता या घटानुभवनिष्ठा कारणता तस्यां घटानुभवत्वमवच्छेदकम्, तेनानुभवत्वावच्छिन्नकारणतानिरूपितकार्यताश्रयत्वस्य स्मृतौ विद्यमानत्वादतिव्याप्तिवारणाय 'स्मृतिहेतुत्व'मुक्तम्, न हि स्मृतिः स्मृतिहेतुरतो न तत्रातिव्याप्तिरित्यलमनल्पजल्पनेन।

❀ दीपिका ❀

भावनां लक्षयति—**अनुभवेति**। (१५६ पृ.) अनुभवध्वंसेऽति-

❀ परिमलः ❀

प्रतिकूलत्वप्रकारकज्ञान—विषयत्वं दुःखस्य लक्षणमित्यर्थः। **बुद्ध्यादयः इति**। (१५६ पृ.) बुद्धि—सुख—दुःखेच्छा—द्वेष—प्रयत्न—धर्मा—ऽधर्मा इत्यर्थः। **अनुभवेति**। अनुभवजन्यत्वे सति स्मृतिहेतुत्वं—भावनाया लक्षणम्, अनुभवानन्तरं भावनाख्यः संस्कारो—व्यापारः, ततः स्मृतिरिति—भावनाया अनुभवजन्यत्वं, स्मृतिजनकत्वञ्च स्पष्टमेवेति—लक्षणसमन्वयः। अनुभवजन्य-

**अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः ॥ ६३ ॥** इति गुणाः ॥

❀ दीपिका ❀

व्याप्तिवारणाय—'स्मृतीति'। आत्मादावतिव्याप्तिवारणाय—'अनुभवे'ति। स्मृतेरपि संस्कारजनकत्वं नवीनरुक्तम्।

स्थितिस्थापकं लक्षयति—अन्यथेति।

संख्यादयोऽष्टौ, नैमित्तिकद्रवत्ववेगस्थितिस्थापकाः सामान्य-

❀ परिमलः ❀

त्वस्य ध्वंसेऽपि सत्त्वात्तत्रातिव्याप्तिरतः—'स्मृतिजनकत्व'निवेशः, आत्मनोऽपि स्मृति—हेतुत्वात्तत्राऽतिव्याप्तिवारणाय—'अनुभवजन्यत्व'दलमितिभावः। स्मृतेरपीति। एवञ्च स्मृतिजन्यभावनाख्यसंस्कारेऽनुभवजन्यत्वविरहादव्याप्तिरतोऽनुभवजन्यत्वं विहाय 'ज्ञानजन्यत्व'मात्रं निवेशनीयं, स्मृतेरपि ज्ञानत्वेन तज्जन्यत्वस्य स्मृतिजन्यभावनायां सत्त्वान्नाऽव्याप्तिरित्याशयः। नवीनैरिति। तन्मते हि तद्विषयकसंस्कारं प्रति ( तद्विषयकस्मृतिं प्रति च— )— तद्विषयकज्ञानत्वेनैव हेतुतेति स्मृतेरपि ज्ञानत्वाद्भावनाजनकत्वमिति भावः।

अन्यथेतीति। प्रकृतावस्थाभिन्नावस्थापादकव्यापारानुकूलकृतिविषयवस्तुनिष्ठप्रकृतावस्थापादकत्वं स्थितिस्थापकलक्षणमित्यर्थः। कटादीति। कटः = तृणास्तरणं, 'चटाई' इति प्रसिद्धम्। 'आदि'पदाद्धनुरादीनां ग्रहणं, कट-धनुरादीनां हस्तादिना सङ्कोचितानां प्रतिबन्धकविगमे पुनरपि स्वरूपेणावस्थितिः प्रसिद्धैव।

संख्यादयोऽष्टौ = संख्या–परिमाण–पृथक्त्व–संयोग–विभाग–परत्वा–ऽपरत्व–गुरुत्वाख्याः, नैमित्तिकं द्रवत्वं, वेगाख्यः, स्थितिस्थापकाख्यश्च संस्कार इति सामान्यगुणा इत्यर्थः। रूपादयः = रूप–रस–गन्ध–स्पर्श–सांसिद्धिकद्रवत्व–स्नेह–बुद्धि–सुख–दुःखेच्छा–द्वेष–धर्माधर्म –भावनाख्यसं-

चलनात्मकं कर्म। ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्। अधोदेशसंयोगहेतुरपक्षेपणम्। शरीरसन्निकृष्टसंयोगहेतुराकुञ्चनम्। शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम्। अन्यत्सर्वं गमनम् ॥ ६४ ॥

नित्यमेकमनेकानुगतं—सामान्यम्, द्रव्यगुणकर्मवृत्ति।

❀ न्यायबोधिनी ❀

सामान्यं निरूपयति—नित्यमेकमिति। नित्यत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम्। 'नित्यत्व'विशेषणानुपादानेऽनेकसमवेतत्वस्य संयोगादौ

❀ दीपिका ❀

गुणाः, अन्ये रूपादयो विशेषगुणाः। द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमत्त्वं—विशेषगुणत्वम्।

कर्मणो लक्षणमाह—चलनेति। उत्क्षेपणादीनां कार्यभेदमाह—ऊर्ध्वेति। शरीरेति। वक्रतासम्पादकं कर्म—आकुञ्चनम्। ऋजुतासम्पादकं प्रसारणमित्यर्थः।

सामान्यं लक्षयति—नित्यमिति। संयोगेऽतिव्याप्तिवार-

❀ परिमलः ❀

स्काराः, द्रव्येति। द्रव्यविभाजकं यदुपाधिद्वयं = पृथिवीत्व—जलत्वादिरूपं धर्मद्वयं, प्रत्येकं तदधिकरणवृत्तयो ये द्वित्वपृथक्त्व-संयोगादयो गुणाः, तदवृत्तिर्जातिः—रूपत्वादिजातिः, तद्वत्त्वं रूपादाविति ते विशेषगुणा इति लक्षणसमन्वयः। पृथिव्याद्येकैकमात्रवृत्तयो गुणा विशेषगुणा इति तु तत्त्वम्। ऊर्ध्वदेशेति। क्रिया, क्रियातो विभागः, विभागात्पूर्वदेशसंयोगनाशः, तत उत्तरदेशसंयोगोत्पत्तिरिति नियमात् क्रियाया ऊर्ध्वदेश संयोगजनकत्वस्य सुलभत्वादिति भावः।

संयोग इति। संयोगस्यानुयोगिप्रतियोग्युभयनिष्ठत्वादिति भावः।

तद्द्विविधं,–परापरभेदात् । परं–सत्ता । अपरं–द्रव्यत्वादि ॥ ६५ ॥

नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ॥ ६६ ॥

❀ न्यायबोधिनी ❀

सत्त्वात्तत्रातिव्याप्तिस्तद्वारणाय 'नित्यत्व'विशेषणम् । 'अनेकसमवेतत्वा'नुपादाने आकाशादावतिव्याप्तिस्तद्वारणायाऽनेकसमवेतत्वम् । 'अनेकसमवेतत्वा'नुपादाने नित्यत्वविशिष्टसमवेतत्वमात्रोक्तावाकाशगतैकत्वपरिमाणादौ, जलपरमाणुगतरूपादौ चातिव्याप्तिः, जलपरमाणुगतरूपादेराकाशगतैकत्वपरिमाणादेर्नित्यत्वात्, समवेतत्वाच्च, अतः 'अनेकेति ।

नित्यद्रव्यवृत्तय इति । नित्यद्रव्येषु परमाण्वादिषु वर्तमानाः, अत एव व्यावर्तकाः—इतरभेदानुमितिहेतवः । नित्यद्रव्यवृत्तित्वरूपपक्षधर्मता-

❀ दीपिका ❀

णाय—नित्यमिति । परमाणुपरिमाणादावतिव्याप्तिवारणाय—अनेकेति । अनुगतत्वं—समवेतत्वम् । घटाद्यत्यन्ताभावो घटाद्यनुगतोऽप्यसमवेत इति नाभावादावतिव्याप्तिः ।

विशेषं लक्षयति—नित्येति ।

❀ परिमलः ❀

परमाण्विति । परमाणुगतपरिमाणस्यापि नित्यत्वात्तत्रातिव्याप्तिरतोऽ-'नेके'ति, तदुक्तौ च तादृशपरिमाणस्यानेकसमवेतत्वविरहान्न दोष इत्याशयः । समवेतत्वं = समवायसम्बन्धेन वर्त्तमानत्वम्, घटाद्यत्यन्ताभावस्य नित्यत्वादनेकघटपटादिवृत्तित्वाच्च तत्राऽतिव्याप्त्यापत्तिरतस्तद्वारणाय'समवेतत्व'–विशेषणं, तथा चात्यन्ताभावस्य स्वरूपेणैव वर्त्तमानतयोक्तसमवेतत्वाभावान्न दोष इत्याशयः । घटाद्यनुगतः = घटादिवृत्तिः । मूले—व्यावर्त्तका इति । नित्यद्रव्याणां पृथिवीपरमाण्वादीनां परस्परभेदसाधका इत्यर्थः ।

**नित्यसम्बन्धः—समवायः, अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ।**

ॐ न्यायबोधिनी ॐ

प्रयोज्येतरभेदानुमापकताशालिन इत्यर्थः। नित्यद्रव्यनिष्ठविशेष्यतानिरूपितैकमात्रवृत्तिभेदानुमितिजनकतावच्छेदकप्रकारताश्रयत्वं विशेषाणां लक्षणमिति भावः। पार्थिवपरमाणौ जलादिभेदानुमापकगन्धेऽतिव्याप्तिवारणाय 'एकमात्रवृत्तित्वं' भेदविशेषणम्। घटादौ तदितरभेदानुमापके तद्रूपादावतिव्याप्तिवारणाय 'निरूपितान्तं' प्रकारताविशेषणम्। एतेन "—'व्यावर्तका' इत्यस्य नित्यद्रव्यविशेष्यकेतरभेदानुमितिप्रयोजका इत्यर्थकतया,—लक्षणपरत्वेन साफल्येऽपि,—'नित्यद्रव्यवृत्तय इति' विफलमेव, स्वरूपाख्यानस्यापि कृतत्वादिति—"प्रत्युक्तम्।

समवायं निरूपयति—**नित्येति**। सम्बन्धत्वं—विशिष्टप्रतीतिनियामकत्वम्। तावन्मात्रोक्तौ संयोगेऽतिव्याप्तिरतो 'नित्य' इति विशेषणम्। **ययोर्द्वयोर्मध्य इति**। [1]यन्निष्ठकालनिरूपिताधेयतासामान्यं यदवच्छिन्नं तदुभयान्यतरत्वमयुतसिद्धत्वमित्यर्थः।

ॐ दीपिका ॐ

समवायं लक्षयति—**नित्येति**। संयोगेऽतिव्याप्तिवारणाय——**नित्येति**। आकाशादावतिव्याप्तिवारणाय—**सम्बन्ध इति**। अयुतसिद्धलक्षणमाह—**ययोरिति**।

ॐ परिमलः ॐ

**नित्येतीति**। नित्यत्वे सति समवेतत्वं समवायलक्षणम्, **संयोग इति**। सम्बन्धत्वस्य संयोगे सत्त्वादिति भावः। **आकाशेति**। नित्यत्वस्य गगने सत्त्वादिति भावः। **ययोरितीति**। ययोः = अवयवावयविनोः—घट-

१. यन्निष्ठं कालनिरूपितमाधेयतासामान्यं यदवच्छिन्नं, तदुभयान्यतरत्वमित्यर्थः। घटपटाद्यवयविनां काले कपालतन्त्वाद्यवयवावच्छेदेनैव सत्त्वात्—यन्निष्ठं—घटाद्यवयवनिष्ठं,

—अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जाति-व्यक्ती, विशेषनित्यद्रव्ये चेति ॥ ६७ ॥

❀ दीपिका ❀

'नीलो घटः' इति विशिष्टप्रतीतिः विशेषणविशेष्यसम्बन्धविषया, विशिष्टप्रत्ययत्वात्, 'दण्डी'तिप्रत्ययव'दिति समवायसिद्धिः। अवयवावयविनाविति। द्रव्यसमवायिकारणमवयवः। तज्जन्यं-द्रव्यमवयवि।

❀ परिमलः ❀

कपालयोर्मध्ये, एकं-घटादिकम्, अविनश्यदवस्थं = विनाशावस्थामनापन्नं सत्-अपराश्रितमेव = कपालाद्यवयवाश्रितं सदेव, अवतिष्ठते-उपलभ्यते, तौ = घटकपालौ,'अयुतसिद्धा'वित्युच्येते, एवं—गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्नित्यद्रव्यविशेषयोरपि लक्षणं सङ्गमनीयम्। अविनश्यदवस्थमेवापराश्रितमवतिष्ठते-विनश्यदवस्थन्तु क्षणमनाश्रितं तिष्ठति, यथा तन्तुनाशे पटादिकमित्याशयेनाऽविनश्यदवस्थ'मित्युक्तम्।

समवायसम्बन्धेऽनुमानं प्रमाणयति—नील इति। विशिष्टप्रतीतिः = विशिष्टबुद्धिः। विशेषणेति। विशेषणं-नीलत्वावच्छिन्नं, विशेष्यं-घटः,-समवायाख्यं-सम्बन्धः, तानवगाहत इत्यर्थः, समवायसिद्धिरिति। द्रव्ययोरेव संयोगात्प्रकृते च संयोगादीनां बाधात्समवायसिद्धिरित्यर्थः। द्रव्येति। पिठरपाकवादिनां मतेऽन्त्यावयविनो घटस्यापि स्वगतरूपादिकं

---

कालनिरूपितमाधेयत्वं—यदवच्छिन्नं—कपालत्व—तन्त्वाद्यवयवावच्छिन्नं, तदुभयान्यतरत्वं—घटकपालाद्यवयवावयविनोरस्त्येवेति समन्वयः। 'इदानीं भूतले घट' इति प्रतीत्या घटनिष्ठं कालनिरूपितमाधेयत्वं भूतलावच्छिन्नमपीति भूतलघटयोरयुतसिद्धत्वापत्तिः, अतः 'सामान्य'पदम्, एवञ्च—घटनिष्ठकालनिरूपिताधेयतासामान्यान्तर्गतकपालावच्छिन्न-वृत्तितायां भूतलावच्छिन्नत्वाभावेन न भूतलघटयोरयुतसिद्धत्वमिति भावः।

**अनादिः सान्तः प्रागभावः, उत्पत्तेः पूर्वं कार्यस्य । सादिरनन्तः प्रध्वंसः—उत्पत्त्यनन्तरं कार्यस्य ।**

❀ दीपिका ❀

प्रागभावं लक्षयति—**अनादिरिति** । आकाशादावतिव्याप्तिवारणाय 'सान्त' इति । घटादावतिव्याप्तिवारणाय—अनादिरिति । प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनकः 'भविष्यती'ति व्यवहारहेतुः प्रागभावः ।

ध्वंसं लक्षयति—**सादिरिति** । घटादावतिव्याप्तिवारणाय,—

❀ परिमलः ❀

प्रति समवायिकारणतया तत्र घटे 'समवायिकारणत्व'मात्रोक्ताववयवत्वापत्तिरतो'द्रव्ये'ति, रूपन्तु—गुणः, तज्जन्यं = समवायिकारणावयवद्रव्यजन्यं, तथा च परमाणौ नातिव्याप्तिः, तेषां जन्यत्वाभावादिति भावः ।

**आकाशादाविति** । आकाशस्याप्यनादित्वादिति भावः, घटादेरपि सान्तत्वात्—विनाशित्वात्प्रागभावत्वापत्तिरतोऽ'नादि'रिति विशेषणमिति भावः । **प्रतियोगीति** । प्रागभावप्रतियोगी—घटः', तत्समवायिकारणं—कपालद्वयं, तत्र वृत्तिः,—प्रतियोगिनो—घटस्य—जनकः—प्रागभाव इत्यर्थः, प्रागभावे प्रमाणं दर्शयति—'भविष्यतीती'ति । तथा च प्रागभावाऽप्रतियोगित्वे सति ध्वंसप्रतियोगित्वे सत्यभावत्वं—प्रागभावत्वमिति लक्षणं फलितम्, प्रागभावस्यानादित्वात्प्रागभावाप्रतियोगित्वं सुलभमेव । मूले—**कार्यस्येति** । कार्यस्योत्पत्तेः पूर्वं 'तिष्ठती'ति योजनीयम् ।

**ध्वंसमिति** । प्रागभावप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वं ध्वंसलक्षणम्, प्रागभावप्रतियोगित्वार्थक—'सादि'रित्येतावदुक्तौ—घटस्यापि तथात्वादतिव्याप्तिः, 'अनन्त'इत्येतावदुक्तौ गगनेऽतिव्याप्तिरत उभयोपादान-

**त्रैकालिकसंसर्गावच्छिन्नतियोगिताकोऽत्यन्ताभावः, यथा–**

❀ न्यायबोधिनी ❀

अत्यन्ताभावं निरूपयति—**त्रैकालिकेति**। प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सत्यन्योन्याभावभिन्नत्वे सत्यभावत्वमत्यन्ताभावस्य लक्षणम्। ध्वंसप्रागभावान्योन्याभावाकाशादीनां वारणाय यथाक्रमं विशेषणोपादानम्। वस्तुतस्तु संसर्गाभावत्वं—तादात्म्यभिन्नसम्बन्धावच्छिन्न-प्रतियोगिताकाभावत्वम्, ध्वंसप्रागभावयोश्च न संसर्गावच्छिन्नप्रतियोगिताकत्वमिति तेनैव तद्वारणे 'त्रैकालिके'ति स्वरूपाख्यानमेवेति बोध्यम्।

❀ दीपिका ❀

—'अनन्त' इति। आकाशादावतिव्याप्तिवारणाय 'सादि'रिति। प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः 'ध्वस्त' इति व्यवहारहेतुः—ध्वंसः।

अत्यन्ताभावं लक्षयति—त्रैकालिकेति। अन्योन्याभावेऽतिव्याप्तिवारणाय—'संसर्गावच्छिन्ने'ति। ध्वंसप्रागभावयोरतिव्याप्तिवारणाय—'त्रैकालिके'ति।

❀ परिमलः ❀

मिति ग्रन्थाशयः। **प्रतियोगीति**। ध्वंसप्रतियोगिघटादिजन्यः, घटादिरूप—प्रतियोगि—समवायिकारण—कपालवृत्तिः 'ध्वस्त' इति व्यवहारासाधारणकारणं—'ध्वंस'इत्यर्थः।

**अत्यन्ताभावमिति**। त्रैकालिकत्वस्य नित्यत्वार्थकतया,—ध्वंस-प्रागभावाऽप्रतियोगित्वे सति संसर्गावच्छिन्नप्रतियोगिताकाभावत्वमत्यन्ताभावत्वमित्यर्थः, अन्योन्याभावस्यापि नित्यतया तत्रातिव्याप्तिवारणाय—'संसर्गे'ति, अन्योन्याभावभिन्नाभावत्वमिति च तदर्थः, ध्वंसप्रागभावयोरपि—अन्योन्याभावभिन्नतयाऽतिव्याप्तिरतो नित्यत्वार्थकं 'त्रैकालिक'पदमिति सक-

'भूतले घटो नास्ती'ति । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः । यथा 'घटः पटो ने'ति ॥ ६८ ॥

❁ न्यायबोधिनी ❁

अन्योन्याभावं निरूपयति—**तादात्म्येति**। अभावत्रयवारणाय विशेषणम् , 'घटाभाववान्ने'ति प्रतीतिविषयघटादिवारणाय विशेष्यम् ।

❁ दीपिका ❁

अन्योन्याभावं लक्षयति—**तादात्म्येति**। प्रतियोगितवाच्छेदकारोप्यसंसर्गभेदादेकप्रतियोगिकयोरत्यन्ताभावान्योन्याभावयोर्बहुत्वम् । केवलदेवदत्ताभावात्—'दण्ड्यभावः' इति प्रतीत्या विशिष्टाभावः,–'एकसत्त्वेऽपि द्वौ न स्तः' इति प्रतीत्या द्वित्वावच्छिन्ना-

❁ परिमलः ❁

लग्रन्थाशयः । 'घटो नास्ती'त्यादौ संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावसत्त्वात्समन्वयः ।

**तादात्म्येतीति** । येन सम्बन्धेन य'न्नास्ती'त्युच्यते तन्निष्ठप्रतियोगितायास्तादृशसम्बन्धावच्छिन्नत्वनियमेन घटे पटस्य तादात्म्येनाभावावगाहनात् 'घटः पटो ने'त्यत्र तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावतया लक्षणसमन्वयः ।

**प्रतियोगितावच्छेदकेति** । प्रतियोगितावच्छेदकधर्मस्य—घटत्व-तद्घटत्वादेः, आरोप्यस्य = प्रतियोगिनो—घटनीलघटादेः, संसर्गस्य = समवायसंयोगादेश्च भेदाद्घटप्रतियोगिकोऽत्यन्ताभावोऽन्योन्याभावश्च भिद्येते इत्यर्थः । अयमाशयः—समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावादितः संयोगसम्बन्धावच्छिन्नघटाद्यभावादीनां भेद एवेति । बहुत्वमेव दृष्टान्तेन प्रदर्शयति—**केवलेति** । केवलदेवदत्ताभावात् = 'देवदत्तो नास्ती'त्यभावात्—'विशिष्टाभावोऽतिरिक्त' इत्यन्वयः । अयमाशयः—देवदत्ताभावा-

❀ दीपिका ❀

भावः, संयोगसम्बन्धेन च घटवति समवायसम्बन्धेन घटाभावः, तत्तद्घटाभावाद्घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावश्चातिरिक्तः। एवमन्योन्याभावोऽपि। 'घटत्वेन पटो नास्ती'ति व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते। पटे घटत्वं नास्तीति तस्यार्थः। अतिरिक्तत्वे स केवलान्वयी।

❀ परिमलः ❀

दण्डीनास्तीत्यभावो भिन्नः, अन्यथा देवदत्तसत्त्वे देवदत्तो नास्तीत्यभावप्रतीतिर्यथा न भवति तथा दण्डी नास्तीत्यभावस्यापि प्रतीतिर्न स्यादतो-देवदत्ताभावाद्दण्ड्यभावो भिन्न एवेति देवदत्तसत्त्वेऽपि दण्डी देवदत्तो नास्तीति प्रतीतिर्भवत्येवेति। विशिष्टाऽभावे प्रतीतिं प्रमाणयति—'दण्ड्यभाव' इति। एकसत्त्वेऽपि = घटवत्यपि भूतले,—'घटपटौ न स्त' इति प्रतीतेरानुभविकतयोभयाभावोऽतिरिक्त इति सम्बन्धः। सम्बन्धभेदेनाप्यभावस्य भेदं दर्शयति—**संयोगेति**। घटवति = भूतले, **समवायेति**। 'समवायेन भूतले घटो नास्ती'त्यभावः—संयोगेन घटाभावादतिरिक्त इत्यन्वयः। सामान्यविशेषाभावयोर्भेदं प्रदर्शयति—**तत्तद्घटेति। घटत्वावच्छिन्नेति**। तत्तद्घटाभावाद्घटसामान्याभावो भिन्न एव—यत्किञ्चिद्घटवति तद्घटो नास्तीति प्रत्ययात्। **एवमिति**। 'चैत्रो न मैत्र' इति भेदा'च्चैत्रो न दण्डी'ति प्रतीतिसाक्षिकोऽभेदो भिन्नः, एवमुभयभेदोऽपि केवलभेदाद्भिन्नः,—'देवदत्तो न देवदत्तचैत्रोभय'मिति। एवं तद्घटभेदाद्घटत्वावच्छिन्नप्रतियोगिताकभेदश्च भिन्न इत्यर्थः। व्यधिकरणधर्मावच्छिन्नाभावः = घटत्वादि-व्यधिकरणधर्मा-वच्छिन्नाभावः, तस्य सप्रमाणत्वे त्वाह—**अतिरिक्तत्व इति**। केवलान्वयी = अत्यन्ताभावाऽप्रतियोगित्वात्सार्वत्रिकः।

"—ननु भूतले घटसत्त्वे न घटाभावप्रतीतिः, तदपसारणे तु घटाभाव-

❀ दीपिका ❀

सामयिकाभावोऽप्यत्यन्ताभाव एव समयविशेषे प्रतीयमानः। घटाभाववति घटानयनेऽत्यन्ताभावस्यान्यत्र गमनाभावेऽपि अप्रतीतेर्घटापसरणे सति प्रतीतेर्भूतले घटसंयोगप्रागभावध्वंसयोर्घटात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते। घटवति तत्संयोगप्रागभावध्वंसयोरसत्त्वादत्यन्ताभावस्याप्रतीतिः। घटापसरणे च संयोगध्वंससत्त्वात्प्रतीतिरिति।

"—केवलाधिकरणादेव 'नास्ती'ति व्यवहारोपपत्तावभावो न

❀ परिमलः ❀

प्रतीतिरतः सामयिकाऽभावोऽपि तत्तत्समये प्रतीयमानोऽतिरिक्तोऽङ्गीकार्य—"इति केषाञ्चिन्मतं निराचष्टे—सामयिकेति। प्रतियोगिविरहकाले प्रतीयमानोऽत्यन्ताभाव एव सामयिकाऽभावो, नातिरिक्तः कश्चिदित्याशयः। नन्वत्यन्ताभावस्य नित्यतया घटानयनेऽपि कथं न घटाभावप्रतीतिरत आह—घटाभाववतीति। घटाभाववति भूतले घटानयने सति अत्यन्ताभावस्य—अन्यत्र गमनाभावेऽपि = तत्रैव भूतले सत्त्वेऽपि—प्रतीतिर्न भवति, घटाद्यानयने कृते तत्र भूतले वर्त्तमानस्याभावस्य प्रतीतिर्भवतीति—भूतलघटसंयोगप्रागभावस्य भूतलघटसंयोगध्वंसस्य च घटाभाववत्ताबुद्धौ नियामकत्वं कल्प्यते, तथा च घटवति भूतले घटसंयोगप्रागभावध्वंसयोरुभयोरप्यसत्त्वान्न घटाभाववत्ताप्रतीतिः, घटापसारणे कृते च घटसंयोगध्वंसस्य सत्त्वाद्घटाभाववत्ताप्रतीतिर्भवत्येवेति सकलग्रन्थाशयः।

"—अभावो न पदार्थान्तरं, किन्तु यत्र भूतलादावधिकरणे 'घटो नास्ती'ति प्रत्ययस्तदधिकरणस्वरूप एवाभावः, इति मीमांसकमतं दूषयितुमुपन्यस्यति—केवलेति। केवलाधिकरणात् = भूतलादिस्वरूपाधिकरणात्, नास्तीति = घटो नास्तीत्यादि, गुरवः = प्रभाकराः, अभावानङ्गीकारे = अभावस्याति-

❀ दीपिका ❀

पदार्थान्तरमिति–"गुरवः। तन्न। अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वात्। "अभावाभावो भाव एव, नातिरिक्तः, अनवस्थाप्रसङ्गात्, ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येवे"ति **प्राञ्चः।**

❀ परिमलः ❀

रिक्तत्वानभ्युपगमे, **कैवल्यस्येति।** अयम्भावः,—"किं नाम कैवल्यं भवतोऽभिप्रेतम्?, भूतलादिस्वरूपमिति चेत्, घटवत्यपि भूतले भूतलस्वरूपस्य घटाभावस्य प्रतीत्यापत्तिः, अथ घटाभाववत्त्वमेव कैवल्यं, हन्त! सिद्धं नः समीहितम्, अतिरिक्ताभावोऽकामेनापि भवता स्वीकृत–" इति।

नन्वभावाभावस्यातिरिक्तत्वे तदभावोऽप्यतिरिक्तः, तदभावोऽप्यतिरिक्त इत्यनवस्थाप्रसङ्ग इत्याशङ्क्य प्राचीनमतमाह—**भाव एवेति।** घटाभावाभावो घटत्वात्मको भाव एव, नातिरिक्तस्वरूप इत्यर्थः। प्राचीनमतमेतत्। **ध्वंसेति।** घटादिध्वंसस्य यः प्रागभावः स ध्वंसप्रतियोगि घटादिस्वरूपः, घटादिध्वंसप्रागभावरूपश्च[1], एवं–घटप्रागभावध्वंसोऽपि घटात्मकप्रागभावप्रतियोगि–स्वरूपः, घटादिप्रागभावध्वंसरूपश्चेति भावः।

अथ "काले द्रव्यत्वं नास्तीति प्रत्ययो न जायते, द्रव्यत्वाभाव इति च प्रत्ययस्तत्र उत्पद्यत इति तयोर्वैषम्यनिर्वाहाय–नास्तीतिप्रत्यये स्वरूपसम्बन्धावच्छिन्नाऽभावाधेयत्वस्य भानं कल्प्यते, तथा चाभावाभावस्य भावस्वरूपत्वे इह घटाभावो नास्तीति प्रत्ययस्य भ्रमत्वमेव स्यात्, भावस्य स्वरूपसम्बन्धेनावृत्तेः, अतोऽभावाभावोऽतिरिक्त एव, न भावस्वरूप" इति

१ तेन घटादिरूपप्रतियोगिप्रागभावदशायामपि 'घटध्वंसो भविष्यती'ति प्रतीतिरुपपद्यते, एवं प्रतियोगिध्वंसदशायामपि 'प्रागभावो नष्ट' इत्यस्योपपत्तिः, अन्यथा दीपिकोक्तप्रतियोगिमात्रस्वरूपत्वे तत्तत्प्रतियोगिनो विद्यमानत्वात्तद्व्यवहारानुपपत्तिरिति भावः।

**सर्वेषामपि पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम् ॥ ६९ ॥**

❀ न्यायबोधिनी ❀

ननु सादृश्यादीनामतिरिक्तपदार्थानामनिरूपणेन न्यूनतेत्यत आह **सर्वेषामिति**। "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति न्यायस्यादिमसूत्रे उक्तानां प्रमाणप्रमेयादीनामित्यर्थः। तद्भिन्नत्वविशिष्टतद्गतभूयोधर्मरूपसादृश्यस्यापि घटपटादिरूपत्वेन नातिरिक्तत्वमेवमन्येषामप्यूह्यम्।

❀ दीपिका ❀

**"अभावाभावोऽतिरिक्त एव, तृतीयाभावस्य प्रथमाभावरूपत्वान्नानवस्थे"ति–नवीनाः।**

**ननु "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ताऽवयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति न्यायशास्त्रे षोडशपदार्थानामुक्तत्वात् कथं सप्तैवेत्यत आह–सर्वेषामिति। सर्वेषां सप्तस्वेवान्तर्भाव इत्यर्थः।**

❀ परिमलः ❀

नवीनमतमुपन्यस्यति—**अतिरिक्त इति**। प्राचीनोक्तामनवस्थामपनयति—**तृतीयेति**। घटाभावाभावाभावस्य घटाभावरूपत्वादित्यर्थः।

मूले—**सर्वेषामिति**। सर्वेषां–प्रमाणप्रमेयादीनां, यथायथं = यथायोग्यम्, उक्तेषु = द्रव्यगुणादिषु, **सिद्धमिति**। ग्रन्थान्ते सिद्धपदोपादान्मङ्गलं कृतम्,—मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्त इति महाभाष्योक्तेरिति सङ्क्षेपः। **सर्वेषामिति**।—

—अथ कथमन्तर्भाव इति चेत्–प्रमाणस्य चक्षुरादेर्द्रव्ये, व्याप्तिज्ञानादेर्गुणे,

❀ दीपिका ❀

'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्' इति द्वादशविधं प्रमेयम्। प्रवृत्तिर्धर्माधर्मौ। रागद्वेषमोहा–दोषाः। रागः—इच्छा। द्वेषो–मन्युः। मोहः–शरीरादावात्मत्वभ्रमः। प्रेत्यभावो—मरणम्। फलं–भोगः। अपवर्गो–मोक्षः, स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःख-

❀ परिमलः ❀

प्रमेयस्यात्मशरीरेन्द्रियरूपस्य द्रव्ये, गन्ध–रस–रूपस्पर्शशब्दप्रवृत्तिबुद्धिस्वरूपार्थस्य–गुणे, मनसो द्रव्ये, दोषाणामिच्छा–द्वेष–मिथ्याज्ञानस्वरूपाणां 'राग–द्वेष–मोह' पदैरुपात्तानां गुणे, मरणोत्तरशरीरप्राणसंयोगरूप–[1]प्रेत्यभावस्य गुणे, सुखदुःखज्ञानात्मकभोगात्मकफलस्य गुणे, वस्तुस्वरूपभोगस्य द्रव्ये, दुःखस्य गुणे, अपवर्गस्याभावे, संशयस्य–गुणे, प्रयोजनस्य–सुखप्राप्तिदुःखहान्यादेः–कर्मण्यभावे च, साध्यत्वेनेच्छाविषयीभूतस्वरूपप्रयोजनस्य यथायथं द्रव्यादौ, दृष्टान्तस्य महानसादेर्द्रव्यादौ, सिद्धान्तस्य द्रव्यादिषु, अवयवानां शब्दस्वरूपाणां–गुणे, व्याप्यारोपेण व्यापकारोपरूपतर्कस्य गुणे, निर्णयस्यापि–गुणे, वादस्यापि–गुणे, जल्पस्यापि गुणे, वितण्डाया गुणे, हेत्वाभासानां यथायथं द्रव्यादौ, अर्थान्तरं प्रकल्प्य दूषणाभिभिधानस्वरूपच्छलस्य–गुणे, असदुत्तरस्वरूपजातेर्गुणे, निग्रहस्थानानां–यथायथं द्रव्यादिष्विति रीत्यान्तर्भावोऽवगन्तव्यः।

स च = मोक्षश्च, **स्वेति**। स्वं–दुःखध्वंसः, तदधिकरणमात्मा, तद्वृत्तिर्यो दुःखप्रागभावः, तदसमानकालीनो यो दुःखध्वंस इत्यर्थः। अस्मदादीनामपि यत्किञ्चिद्दुःखध्वंसवत्त्वादतिव्याप्तिरतः 'कालीना'न्तम्। मोक्षे दुःखान्तरोत्पत्त्यभावेन दुःखप्रागभावोऽप्यस्त्येवेति समन्वयः। तत्त्वबुभुत्सोः=

(१) प्रेत्य–मृत्वा, भावो–जननमित्यर्थः, चरमप्राणशरीरसंयोगध्वंसो मरणम्, आद्यशरीरप्राणसंयोगो जन्मेति विवेकः

❁ दीपिका ❁

ध्वंसः। प्रयोजनं = सुखप्राप्तिः, दुःखहानिश्च। दृष्टान्तो—महानसादिः। प्रामाणिकत्वेन अभ्युपगतोऽर्थः—सिद्धान्तः। निर्णयो—निश्चयः, स च प्रमाणफलम्। तत्त्वबुभुत्सोः कथा—वादः। उभयसाधनवती विजिगीषुकथा—जल्पः। स्वपक्षस्थापनहीना—वितण्डा। कथा—नाम नानावक्तृकः,—पूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः। अभिप्राया-न्तरेण प्रयुक्तस्यार्थान्तरं प्रकल्प्य दूषणं—छलम्। असदुत्तरं—जातिः। साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्य-

❁ परिमलः ❁

तत्त्वजिज्ञासार्थं, कथा = वाक्यप्रयोगः, उभयसाधनवती = स्वपक्षस्थापन-परपक्षनिराकरणवती, तेन वितण्डायां नातिव्याप्तिः। **छलमिति**। यथा 'नवकम्बलोऽय'मिति वाक्यस्य नूतनकम्बलवानयमित्यर्थकस्य 'नास्य नव कम्बलाः सन्तिः, दरिद्रत्वा'दित्यादिना दूषणं—छलम्। **असदुत्तरमिति**। उत्तरव्याघातकमुत्तरमित्यर्थः। जातिभेदानाह—**साधर्म्येति**। 'साधर्म्य-समा'दिचतुर्विंशतिजातिनिरूपणं, निग्रहस्थाननिरूपणञ्च न्यायदर्शनपञ्च-माध्यायविवृत्या स्पष्टमवसेयम्'।

---

❁ आमोदः ❁

१. यथा 'आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवत्' क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेवेति **स्थापनायामुत्तरं**—'यदि सक्रियत्वसाधर्म्यात् सक्रियः, तदा विभुत्वरूपनिष्क्रियत्वसाधर्म्यान्निष्क्रिय एव किं न स्यात्, न चात्र किंचिद्विनिगम-कमस्तीति' ॥ १ ॥ वैधर्म्येण दूषकमुत्तरं—**वैधर्म्यसमा**, तथा तत्रैव 'क्रियावतो लोष्टस्य साधर्म्याद्यदि क्रियावानात्मा तदा विभुत्वरूपतद्वैधर्म्यान्निष्क्रिय एव किं न स्यात्, नहि 'तत्साधर्म्यात् क्रियावता भवितव्यम्, तद्वैधर्म्यान्निष्क्रियेण न भवितव्यम्, इत्यत्र किंचित् नियामकमस्ति' इति ॥ २ ॥ परोक्तसाधनादेव—तदव्यापकस्य धर्मस्य-पक्षे

❀ दीपिका ❀

प्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्यु-

❀ आमोदः ❀

आपादनम्—**उत्कर्षसमा**, यथा 'शब्दोऽनित्यः कृतकत्वाद् घटव'दित्यादौ कश्चिदेव-माह—'यदि कृतकत्वेन हेतुना शब्दो घटवदनित्यः स्यात्, तर्हि तेनैव हेतुना शब्दो घटवत् सावयवः स्यात्' इति ॥ ३ ॥ परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तर-स्याभावसाधनम्—**अपकर्षसमा**, यथा तस्मिन्नेवानुमाने 'यदि कृतकत्वेन शब्दो घटवदनित्यः स्यात्, तर्हि तेनैव शब्दो घटवदश्रावणः स्यात्' इति ॥ ४ ॥ वर्ण्यस्य=स्थापनीयस्य दृष्टान्तधर्मस्य, पक्षे साधनं—**वर्ण्यसमा**, यथा पूर्वोक्तानुमाने 'क्रिया-जनकनोदनाख्यसंयोगवत्त्वाल्लोष्टादेर्भवतु क्रियावत्त्वं, आत्मनस्तु क्रियावत्त्वे तज्जनकनो-दनाख्यसंयोगवत्त्वमपि स्यात्' इति ॥ ५ ॥ साध्यहेत्वोर्धर्मयोरपि पक्षे तुल्यतासाधनम्—**अवर्ण्यसमा**, यथा तत्रैवानुमाने लोष्टादिगतं नोदनादिरूपक्रियाहेतुगुणवत्त्वमात्मन्य-सिद्धम्, तथाच तुल्यतया यथा असिद्धेन क्रियाहेतुगुणेन आत्मनि क्रियावत्त्वं साध्यते, तथा तादृशेन क्रियावत्त्वेन तज्जनकगुणवत्त्वमपि किमिति न साध्यते, नियामकाभावात्' इति ॥ ६ ॥ दृष्टान्तविकल्पं प्रदर्श्य दार्ष्टान्तिकविकल्पकथनम्—**विकल्पसमा**, यथा तत्रैवानुमाने क्रियाहेतुगुणयुक्तं किंचिद्गुरु, यथा लोष्टादिकं, किंचिल्लघु, यथा वायुः। एवं क्रियाहेतुगुणयुक्तं किंचित्क्रियावत् स्यात्, यथा लोष्टादि, किंचिदक्रियम्, यथात्मा, पूर्वं विकल्पो भवतीत्ययं तु न भवत्यत्र किं नियामकं स्यात्' इति ॥ ७ ॥ दृष्टान्तस्य पक्षतुल्यताकथनं—**साध्यसमा**, साध्यशब्दोऽत्र पक्षवाची यथा तत्रैव, यदि 'यथा लोष्टः तथा आत्मा' इति त्वयोच्यते, तदा 'यथा आत्मा तथा लोष्टः' इत्यप्यायातम्, तथाच 'यद्यात्मनि क्रियावत्त्वं साध्यते तर्हि लोष्टेपि तत्साधनीयं, नेति चेत्, तर्हि यथा लोष्टस्तथात्मेति न वाच्यम्, लोष्टसदृश आत्मा नात्मसदृशो लोष्ट इत्यत्र नियामका-भावात्' इति ॥ ८ ॥ प्राप्त्या प्रत्यवस्थानम्—**प्राप्तिसमा**, प्राप्तिश्च साध्यहेत्वोः सामानाधिकरण्यम्, यथा तत्रैव क्रियाहेतुगुणवत्त्वेनैव-किमिति क्रियावत्त्वेन तादृशगुण-वत्त्वं न, उभयोरविशेषात्' इति ॥ ९ ॥ अप्राप्त्या प्रत्यवस्थानम्—**अप्राप्तिसमा**,

❁ दीपिका ❁

———पलब्ध्यनुपलब्धिनित्यकार्याकार्यसमजातयः।

❁ आमोदः ❁

यथा तत्रैव 'पूर्वोक्तदोषादप्राप्तस्य हेतोः साध्यसाधकत्वं वाच्यम्, तथा चाप्राप्तत्वाविशेषात् स सर्वः सर्वं साधयेदिति, अयमेव हेतुः साध्याभावं किमिति न साधयेदित्यत्र विनिगमकाभावात्' इति ॥ १० ॥ साधनपरम्पराप्रश्नः—**प्रसङ्गसमा,** यथा 'क्रियावत्त्वे क्रियाहेतुगुणवत्त्वं साधनम्, तत्र किं साधनम्, नहि साधनं विना कस्यचित्सिद्धिररित एवं तत्रापि किं साधनम्' इत्यादि ॥ ११ ॥ दृष्टान्तान्तरेण साध्याभावसाधनं—**प्रतिदृष्टान्तसमा,** यथा तत्रैव लोष्टदृष्टान्तेन क्रियावत्त्वे साधिते निष्क्रियाकाशदृष्टान्तेन आत्मनो निष्क्रियत्वमेव किं न स्यात्, 'लोष्टदृष्टान्तेन क्रियावत्त्वमाकाशदृष्टान्तेन निष्क्रियत्वं न, इत्यत्र नियामकाभावात् इति ॥ १२ ॥ अनुत्पत्त्या प्रत्यवस्थानम्—**अनुत्पत्तिसमा,** यथा 'घटो न नित्यः जन्यैकत्वात्' इत्यादौ कश्चिदाह—यदि जन्यैकत्वमनित्यत्वे प्रमाणं तदा घटे एकत्वोत्पत्तेः पूर्वं तदभावान्नित्यत्वम्, नित्यश्चेत्, तदाऽनुत्पन्न एवेति ॥ १३ ॥ साधारणधर्मं प्रदर्श्य संशयोद्भावनं—**संशयसमा,** यथा 'शब्दोऽनित्यः कार्यत्वात्', इत्यादौ शब्दस्यानित्येन घटेन सह कार्यत्वरूपं साधर्म्यं यथास्ति, तथा नित्येन शब्दत्वेन सह श्रावणप्रत्यक्षविषयत्वं साधर्म्यमस्तीति उभयसाधर्म्यदर्शनात् संशयः स्यात्, एकपरिशेषे नियामकाभावात्' इति ॥ १४ ॥ वादुक्तहेतोः साध्यविपरीतसाधकं हेत्वन्तरोद्भावनं—**प्रकरणसमा,** सत्प्रतिपक्षोदाहरणमेवात्रोदाहरणं बोध्यम् ॥ १५ ॥ कालत्रयेऽपि हेतुत्वासंभवेन अहेतुत्वकथनम्—**अहेतुसमा,** यथा 'कार्यत्वादिरूपसाधनं साध्यादनित्यत्वात् पूर्वकालवृत्ति चेत्, तदाऽनित्यत्वरूपसाध्यस्य तदानीमभावात् कस्य साधकमथ पश्चात्कालवृत्ति चेत् तदा पूर्वकाले साधनाभावात् कस्य साध्यमनित्यत्वं, यदि चोभयमेककालवृत्ति, किं कस्य साधनं, किं कस्य साध्यं—विनिगमकाभावादिति। **हेतुसमेति** पाठे तु—कालत्रयेऽपि हेतुत्वस्यासंभवकथनं हेतुसमेत्यर्थः ॥ १६ ॥ अर्थापत्तिपुरस्कारेण साध्याभावोद्भावनम्—**अर्थापत्तिसमा,** यथा 'पूर्वोक्तानुमाने शब्दस्यानित्यसाधर्म्यादनित्यत्वं यदि, तदर्थापत्त्या सिद्धं नित्यसाध-

❀ आमोदः ❀

र्थानित्यत्वमपि एकतरावधारणे नियामकाभावात्' इति ॥ १७ ॥ सर्वाविशेषप्रसंगोद्भावनम्—**अविशेषसमा,** यथा तत्रैव 'यदि कृतकत्वादिनाऽनित्यघटादिसाधर्म्यण शब्दस्यानित्यत्वं तदा प्रमेयत्वादिरूपेण तत्साधर्म्येण सर्वस्यैवानित्यत्वं स्यात्, मदुक्तसाधर्म्येण तत् सिद्धयति, नतु त्वदुक्तेनेत्यत्र नियामकाभावात्' इति ॥ १८ ॥ उभयपक्षसाधर्म्येण साधनोपपत्तिकथनम्—**उपपत्तिसमा,** 'यदि चानित्यत्वसाधनं कार्यत्वमुपपद्यत इति शब्दस्यानित्यत्वम्, तदा नित्यत्वसाधनमपि किंचिदुपपद्यत इति नित्यत्वं किं न स्यात्' इति ॥ १९ ॥ वाद्युपदर्शिते साधनाभावेऽपि साध्यस्योपलब्धिकथनम्,—**उपलब्धिसमा,** यथा 'शब्दोऽनित्यः प्रयत्नानुविधायित्वात् घटवत्' इत्यत्र प्रयत्नं विनापि वायुनोदनवशात् वृक्षशाखाभङ्गजन्यशब्दस्योपलब्धेर्न प्रयत्नानुविधायित्वं शब्देऽस्ति' इति ॥ २० ॥ वादिनानुपलब्धिवशात् कस्यचित् पदार्थस्यानङ्गीकारेऽनुपलब्धिवशादेव वाद्यभिमतस्यापि यत्किंचित्पदार्थस्याभावसाधनम्—**अनुपलब्धिसमा,** यथा 'जलादेर्विद्यमानस्याप्यावरणवशादनुपलब्धिः, तद्वत् उच्चारणात्पूर्वं शब्दस्य विद्यमानस्याप्यावरणवशादनुपलब्धिरित्येतन्मतं वादिना दूष्यते 'यद्यावरणवशाच्छब्दो नोपलभ्यते तदा जलाद्यावरणमिव शब्दाद्यावरणमप्युपलभ्येत' इति। अत्रोत्तरं—'यदि भवद्भिरनुपलब्धित आवरणवशाच्छब्दो नोपलभ्यते तदानुपलब्धेरप्यनुपलब्ध्यभावे सिद्धे तदभावादावरणसिद्धिः' इति ॥ २१ ॥ धर्मस्य नित्यत्वविकल्पाद्धर्मिणो नित्यत्वसाधनं—**नित्यसमा,** यथा 'शब्दस्य यदनित्यत्वं भवद्भिरुच्यते तन्नित्यमनित्यं वा। यदि नित्यं, तदा शब्दवृत्तेरेव तस्य सदातनत्वाच्छब्दस्यापि तथात्वमागतम्, अथानित्यं—तदा शब्दे कदाचित् अनित्यत्वाभावोऽस्तीति नित्य एव शब्द इत्युभयथापि शब्दस्य नित्यत्वम्' इति ॥ २२ ॥ अनित्यदृष्टान्तसाधर्म्यात् सर्वानित्यत्वप्रसङ्गोद्भावनम्—**अनित्यसमा,** यथा 'यद्यनित्येन घटेन सादृश्याच्छब्दोऽनित्य इत्युच्यते, तदा येन केनचिद्धर्मेण सर्वस्यैव तत्सदृशत्वात् सर्वस्यानित्यत्वप्रसङ्गः' इति ॥ २३ ॥ वाद्युक्तहेतोरन्यकार्येणापि संभवाभिधानं,—**कार्यसमा,** यथा तत्रैव प्रयत्नानुविधायित्वमुभयथापि संभवति घटादिवत्। शब्दस्वरूपोत्पत्तौ जलादिवदावरकनिवृत्तौ च उभयत्रापि प्रयत्नानुविधायित्वदर्शनात्। तथाच तस्यावरकनिवृत्तिरूपकार्यान्तरस्य संभवान्नानित्यत्वं नियतमिति ॥२४॥ क्वचित्

❁ दीपिका ❁

**वादिनोऽपजयहेतुर्निग्रहस्थानम् । प्रतिज्ञाहानिः, प्रतिज्ञान्तरं, प्रतिज्ञाविरोधः, प्रतिज्ञासन्न्यासः, हेत्वन्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालं, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा,**

❁ आमोदः ❁

**कारणसमेति** पाठः, तस्यापि 'कारणस्य प्रयत्नानुविधायित्वस्योभत्र शब्दस्योत्पत्तौ च समत्वाभिधानम्' इति रीत्या उक्त एवार्थे पर्यवसानमवसेयमिति **नीलकण्ठभट्टाः**,

निग्रहस्थानं लक्षयति—**वादिन इति।** इदं च यद्यपि च्छलादावप्यस्ति तथाप्यर्थान्तरादिरूपनिग्रहस्थानमध्येऽन्तर्भावाददोषः । छलत्वादिनापि ज्ञानस्योपयोगित्वात्पृथगुपादानं हेत्वाभासवत्। तस्यावान्तरभेदान् दर्शयति—**प्रतिज्ञेत्यादिना,**। तत्र प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा **प्रतिज्ञाहानिः**। यथा 'शब्दोऽनित्यः प्रत्यक्षगुणत्वात्' इत्यत्र 'सोऽयं गकारः' इत्यादि प्रत्यभिज्ञाबलात् परेण बाधे उद्भाविते 'अस्तु तर्हि नित्यः शब्दः' इति नित्यत्वमङ्गीकुर्वन् वादी शब्दस्यानित्यत्वप्रतिज्ञां जहाति ॥ १ ॥ परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनं,—**प्रतिज्ञान्तरम्** यथा 'क्षित्यादिकं गुणजन्यं कार्यत्वात्' इत्यत्र अदृष्टजन्यत्वेन सिद्धसाधनोद्भावने 'सविपक्षेति' गुणविशेषणदानम् ॥ २ ॥ स्वोक्तसाध्यविरुद्धहेतुकथनं—**प्रतिज्ञाविरोधः**, यथा 'द्रव्यं गुणभिन्नं, रूपादितः पृथक्त्वेनानुपलभ्यत्वात्' इति ॥ ३ ॥ स्वोक्तेऽर्थे परेण दूषिते तदपलापः—**प्रतिज्ञासंन्यासः**, यथा 'शब्दोऽनित्यः ऐन्द्रियकत्वात्' इत्युक्ते, परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते स्वोक्तमपलपति 'केनोच्यते शब्दोऽनित्य इति' ॥ ४ ॥ परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुकोटौ विशेषणान्तरोपादानं—**हेत्वन्तरम्**, या 'शब्दोऽनित्यः प्रत्यक्षत्वात्' इत्यत्र सामान्ये व्यभिचारोद्भावने 'जातिमत्त्वे सति' इति विशेषणदानम् ॥ ५ ॥ प्रकृतानुपयुक्तार्थकथनम्—**अर्थान्तरम्**, यथा 'नित्यः शब्दः अस्पर्शवत्त्वात्' इति हेतुः, हेतुपदं च हिनोतेस्तुनिप्रत्यये निष्पन्नम्, पदं च सुप्तिङन्तम्—इत्यादि ॥ ६ ॥ अवाचकशब्दप्रयोगो,—**निरर्थकम्**, यथा

❀ दीपिका ❀

पर्यनुयोज्योपेक्षणं, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च–निग्रहस्थानानि । शेषं—सुगमम् ।

❀ परिमलः ❀

शेषं = दीपिकाव्याख्यातांशभिन्नः 'प्रमाणप्रमेय' सूत्रांशः,

नन्वनलसंयोगे सत्यपि मणिसत्त्वदशायां दाहानुत्पादान्मण्यादेः प्रतिबन्धकता वाच्या, सा च दाहानुकूलशक्तिस्वीकार एव स्वरसत उपपद्यते, प्रतिबन्धकतायाः 'कार्यानुकूलशक्तिविघटकत्व' रूपत्वात् , एवञ्च शक्तिरति-

❀ आमोदः ❀

'शब्दोऽनित्यः जबगडदशत्वात्' इत्यादि ॥ ७ ॥ परिषत्प्रतिवाद्यबोधकप्रयोगः—**अविज्ञातार्थम्**, तच्च 'क्लिष्टान्वयमप्रसिद्धार्थकं त्वरितोच्चारितम्' इत्यादिरूपम् ॥ ८ ॥ परस्परानन्वितार्थकपदसमूहोऽ**पार्थकम्**, यथा 'शब्दो घटःपटो नित्यमनित्यं च प्रमेयत्वात्' इत्यादि ॥ ९ ॥ अवयवानां व्युत्क्रमेण कथन**मप्राप्तकालम्**, यथा 'शब्दत्वाच्छब्दोऽनित्यः' इत्यादि ॥ १० ॥ यत्किंचिदवयवशून्यावयवाभिधानं,—**न्यूनम्** । ॥ ११ ॥ अधिकहेत्वादिकथनम्,—**अधिकम्**, यथा 'शब्दोऽनित्यः शब्दत्वात्, श्रावणत्वाच्च' इत्यादि ॥ १२ ॥ अनुवादं विना कथितस्य पुनः कथनं—**पुनरुक्तम्**, यथा 'शब्दोऽनित्यः' शब्दोऽनित्यः' इत्यादि ॥ १३ ॥ परिषदा वादिना च त्रिरभिहितस्याप्यननुवादः—**अननुभाषणम्** ॥ १४ ॥ परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थाबोधः—**अज्ञानम्** ॥ १५ ॥ उत्तरार्हं परोक्तं बुद्ध्वापि उत्तरस्यास्फूर्तिवशात्तूष्णींभावः—**अप्रतिभा** ॥ १६ ॥ असंभवत्कालान्तरककार्यव्यासङ्गमुद्भाव्य कथाविच्छेदो—**विक्षेपः** ॥ १७ ॥ स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानं—**मतानुज्ञा** ॥ १८ ॥ उद्भावनार्हपरकीयनिग्रहस्थानानुद्भावनं—**पर्यनुयोज्योपेक्षणम्** ॥ १९ ॥ निग्रहस्थानरहिते निग्रहस्थानोद्भावनं—**निरनुयोज्यानुयोगः** ॥ २० ॥ एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम्—**अपसिद्धान्तः** ॥ २१ ॥—इति नीलकण्ठ-भट्टाः ।

❁ दीपिका ❁

ननु करतलानलसंयोगे सत्यपि, प्रतिबन्धके सति दाहानुत्पत्तेः—शक्तिः पदार्थान्तरमिति चेन्न, प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात्, कारणत्वस्यैव शक्तिपदार्थत्वात्।

ननु भस्मादिना कांस्यादौ शुद्धिदर्शनादाधेयशक्तिरङ्गीकार्येति चेन्न, भस्मादिसंयोगसमानकालीनाऽस्पृश्यस्पर्शप्रतियोगिकयावदभावसहितभस्मादिसंयोगध्वंसस्य 'शुद्धि'पदार्थत्वात्।

❁ परिमलः ❁

रिक्तः पदार्थ इति कथं सप्तैव पदार्था इत्याशङ्कते प्रभाकरः—नन्विति। करतलं = हस्ततलम्, अनलसंयोगः = वह्निसंसर्गः, प्रतिबन्धके = मण्यादौ, प्रतिबन्धकत्वं न 'कार्यानुकूलशक्तिविघटकत्वं', किन्तु 'कारणीभूताभावप्रतियोगित्वमेव', कारणीभूतोऽभावश्च मण्याद्यभावः, तत्प्रतियोगित्वस्य मण्यादौ सत्त्वात्प्रतिबन्धकतेति प्रतिबन्धकाभावस्य कार्यमात्रं प्रति कारणत्वेनैवोपपत्तौ शक्तिर्नातिरिक्तः पदार्थ इत्याशयेन समाधत्ते—नेति। ननु तर्हि 'अस्यात्र शक्ति' रित्यादयो व्यवहाराः कथमुपपद्येरन्नित्यत आह—कारणत्वस्यैवेति।

ननु कांस्यादेरस्पृश्यामेध्यवस्तुस्पर्शे सति न भोजनादिरूपकार्ययोग्यता, शक्तिमत्कांस्यादेरेव भोजनयोग्यतयाऽमेध्यसम्पर्के शक्तेर्नाशाच्छक्तिमत्कांस्यादेरभावात्, भस्मादिसंयोगे च पुनः शक्त्युत्पादाद्भोजनरूपकार्ययोग्यतेति कांस्यादावाधेयशक्तेरङ्गीकरणीयतया पुनरपि शक्तिस्वीकार आवश्यकः, न च तत्राऽपि अस्पृश्यसंस्पर्शस्य प्रतिबन्धकत्वकल्पनेनैवोपपत्तिरिति वाच्यं, तादृशास्पृश्यसम्पर्कस्य संयोगरूपतया तद्विनाशे भस्मादिसंयोगं विनाऽपि भोजनयोग्यतापत्तेः,—इत्याशङ्कते—नन्विति।

समाधत्ते—नेति। भस्मादीति। 'कालीना'न्तसभावविशेषणम्। यत्र कांस्यादौ भस्मादिसंयोगध्वंसानन्तरं पुनरस्पृश्यसंस्पर्शस्तत्रापि भस्म-

❀ दीपिका ❀

स्वत्वमपि न पदार्थान्तरम्, यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात्, तदवच्छेदकं च प्रतिग्रहादिलब्धत्वमेवेति ।

अथ विधिर्निरूप्यते—प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो-

❀ परिमलः ❀

संयोगध्वंसस्य सत्त्वाद्भोजनकार्यार्हत्वापत्तिरतो ध्वंसे 'सहिता'न्तं विशेषणम्, एवञ्च तत्र भाव्यमेध्यसम्पर्कप्रागभावस्य सत्त्वाद् भस्मादिसंयोगसमानकालीनास्पृश्यसम्पर्कयावदभावानां विरहान्न दोषः, यत्र भस्मसंयोगास्पृश्यसम्पर्कौ युगपदेवोत्पन्नविनष्टौ तत्र तत्तदस्पृश्यसम्पर्काभावकूटसामानाधिकरण्यविशिष्टभस्मादिसंयोगमादाय शुद्धतापत्तिरतः 'कालीना'न्तमभावविशेषणम्, तथा च तत्र भस्मसंयोगक्षणावच्छेदेन यावदभावानामसत्त्वान्न शुद्धतेति सङ्क्षेपः ।

स्वत्वस्य पदार्थान्तरतां निरस्यति—**स्वत्वमपीति** । 'चैत्रस्येदं धन'-मित्यादाविति शेषः । यथा स्वस्येच्छा भवति तथा विनियोगः = दानादिरूपकार्ये योजनं, तद्योग्यत्वमित्यर्थः तदवच्छेदकं = तादृशयोग्यताप्रयोजकं, प्रतिग्रहः = यज्ञादिलब्धं धनम्, 'आदि' पदाद्भूमिजय-निधानादेर्ग्रहणम् । तदित्थं-**सप्तैव पदार्था** इति सिद्धम् ।

❀ अथ विधिवादः ❀

**प्रयत्नेति** । प्रयत्नजनिका या चिकीर्षा, तज्जनकं यत्—गुरुमते, कृतिसाध्यत्वप्रकारकं, नैयायिकमते—कृतिसाध्यत्वविशिष्टेष्टसाधनत्वप्रकारकं ज्ञानं—तद्विषयीभूतं, 'कृतिसाध्यत्वं'गुरुमते, 'कृतिसाध्यत्वविशिष्टे साधनत्वं' नैयायिकमते,—'विधि'पदार्थः । कृतिसाध्यत्वादिज्ञानस्य चिकीर्षाद्वारा प्रयत्नजनकत्वादित्यर्थः । तत्प्रतिपादकः = प्रयत्नजनकचिकीर्षाजनकज्ञानविषय—कृतिसाध्यत्वेष्टसाधनत्वादिप्रतिपादकः—लोट्-लिङादिः, 'विधि'-रिति शेषः ।

❁ दीपिका ❁

विधिः, तत्प्रतिपादको लिङादिर्वा । कृत्यसाध्ये प्रवृत्त्यदर्शनात्,—कृतिसाध्ये प्रवृत्तिदर्शनात्,—कृतिसाध्यताज्ञानं प्रवर्तकम् । न च विषभक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले, विहितकालशुचिजीवित्वादि-निमित्त-ज्ञानजन्यस्य नित्यनैमित्तिकस्थले, प्रवर्तकत्वात् । न चाऽननुगमः,—स्वविशेषणवत्ता-

❁ परिमलः ❁

गुरुमतमाह—**कृत्यसाध्य इति** । कृतिः = व्यापारः, स्वकृत्यसाध्यत्वेन ज्ञातेऽप्रवृत्तेः, कृतिसाध्यत्वेन ज्ञाते च प्रवृत्तेः कृतिसाध्यत्वज्ञानमेव चिकीर्षाद्वारा प्रवर्त्तकमित्यर्थः, एवञ्च नैयायिकाभिमतकृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानस्य प्रवर्त्तकत्वं निराकृतं वेदितव्यम् । ननु विषभक्षणेऽपि कृतिसाध्यत्वप्रकारकज्ञानस्य सत्त्वात्तत्र प्रवृत्त्यापत्तिरित्याशङ्क्य निराचष्टे—**न चेति । इष्टेति** । इष्टसाधनत्वं लिङ्गं = हेतुर्यस्य कृतिसाध्यताज्ञानस्येति विग्रहः, 'यागादिर्मत्कृतिसाध्यः, मत्कृतिं विनाऽनुत्पद्यमानत्वे सति इष्टसाधनत्वा'दित्यनुमानजन्यकृतिसाध्यत्वज्ञानस्यैव काम्यस्थले प्रवर्त्तकतया विषभक्षणे इष्टसाधनत्वरूपहेतुविरहात्साध्यस्य कृतिसाध्यत्वस्याप्यभावान्न दोष इत्याशयः ।

**विहितेति** । विहितो = विधिबोधितो यः कालः = सन्ध्यावन्दनादिसमयः, तस्मिन्यत्—शुचिजीवित्वम् = आत्ममनःशरीरशुद्धिः, रोगादिराहित्यञ्च, निमित्तज्ञानं = राहूपरागादि—पुत्रजन्मादि निमित्तज्ञानं, तथा च—'अहमेतत्कालिककृतिसाध्यसन्ध्यावन्दनकः, एतत्कालिकशुचिजीवित्वा'दित्येवमानुमानिकं विहितकालशुचिजीवित्वज्ञानाधीनं कृतिसाध्यताज्ञानं सन्ध्यावन्दनादिनित्यकर्मसु प्रवर्त्तकम्, आशौचादिरूपनिमित्तज्ञानाधीनस्य कृतिसाध्यत्वज्ञानं च नैमित्तिकेषु कर्मसु प्रवर्त्तकमिति न विषभक्षणादौ प्रवृत्तिप्रसङ्गः, तत्रेष्टसाधनत्वाभावादित्याशयः । **न चेति** । काम्यनित्य-

❀ दीपिका ❀

प्रतिसन्धानजन्यत्वस्यानुगतत्वादिति–**गुरवः**, **तन्न**, लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकीर्षाद्वारा प्रयत्नजनकत्वात्। न च नित्ये इष्टसाधनत्वाभावादप्रवृत्तिप्रसङ्गः, तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात्, तस्मात्कृतिसाध्येष्टसाधनत्वमेव लिङाद्यर्थः।

❀ परिमलः ❀

नैमित्तिकेषु कर्मसु प्रवृत्तिप्रयोजकस्यैकस्याभावादननुगम इत्यर्थः। **स्वेति**। स्वं = प्रवर्त्तमानः पुरुषः, तद्विशेषणं—तन्निष्ठो धर्मः—कामना शुचिजीवित्वादिः, तद्वत्तायाः = कामनादिमत्तायाः,—(कामनाविषय-स्वर्गादि साधनत्वादेरिति यावत्)—यत् प्रतिसन्धानं = ज्ञानं, तज्जन्यत्वस्य नित्यकाम्यादि-सकलकर्मप्रवृत्तौ सत्त्वादनुगम इत्यर्थः। गुरुमतं निरस्यति—**तन्नेति**। लाघवेन = कारणतावच्छेदकलाघवेन, स्वविशेषणवत्तेत्यादिरीत्यानुगमे कारणतावच्छेदकस्य जन्यत्वघटिततया गौरवं स्पष्टमेव। **कृतिसाध्येष्टेति**। कृतिसाध्यत्वविशिष्टेष्टसाधनत्वज्ञानस्येत्यर्थः।

**चिकीर्षाद्वारेति**। आदौ कृतिसाध्यत्वविशिष्टेष्टसाधनत्वप्रकारकं यागादौ ज्ञानं ततश्चिकीर्षा, ततः प्रवृत्तिरिति क्रमस्य—जानाति, इच्छति' यतते—इत्येवं रीत्या—सर्वसम्मतत्वादित्यर्थः। नित्ये = सन्ध्यावन्दनादौ, **इष्टेति**। स्वर्गादीष्टेत्यर्थः। तत्रापि = नित्येऽपि कर्मणि, प्रत्यवायपरिहारस्य दुरितप्रागभावस्य, पापक्षयस्य=दुरितध्वंसस्य, सन्ध्यावन्दनाद्यकरणजन्य-प्रत्यवायस्य सन्ध्यावन्दनादिकरणेऽनुत्पत्तेः पापप्रागभावः स्पष्ट एव, 'सन्ध्यामुपासते ये तु सततं शंसितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामय'मित्यादिवाक्यैः सन्ध्योपासनादेः पापनाशफलकत्वस्यापि सर्वैः स्वीकरणीयत्वादिति भावः। तस्मात्=नित्यादिस्थलेऽपीष्टसाधनत्वस्य वक्तुं शक्यत्वात्।

❀ दीपिका ❀

ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यत्र लिङा स्वर्गसाधनकार्यं प्रतीयते, यागस्याशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वायोगात ,–तद्योग्यं स्थायिकार्यमपूर्वमेव लिङाद्यर्थः। कार्यं-कृतिसाध्यम्, कृतेः सविषयत्वाद्विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति, 'कस्य कार्यम्' इति नियोज्याकाङ्क्षायां 'स्वर्गकाम'पदं नियोज्यपरतयाऽन्वेति, कार्यबोद्धा—नियोज्यः। तेन 'ज्योतिष्टोमनामकयागविषयं स्वर्गकामस्य कार्यम्', इति वाक्यार्थः सम्पद्यते। वैदिकलिङ्त्वात् 'यावज्जीवमग्निहोत्रं जुहुयात्' इति नित्यवाक्येऽप्यपूर्वमेव

❀ परिमलः ❀

लिङादेः कार्ये(ऽपूर्वे) शक्तिरिति प्राभाकरमतं खण्डयितुमुत्थापयति **नन्विति। लिङेति।** स्वर्गसाधनमपूर्वरूपं पुण्यापरपर्यायं लिङ्प्रत्ययार्थ इत्यर्थः। क्रियारूपस्य यागस्य चिरध्वस्तस्य स्वर्गसाधनत्वायोगादतो यागोत्पन्नमदृष्टमेव स्वर्गसाधनं तदेव च लिङर्थ इति तदाशयः। 'ज्योतिष्टोमेने'त्यादौ शाब्दबोधप्रकारं दर्शयति—**कार्यमिति।** यागे साक्षात्कृतिसाध्यत्वम्, अपूर्वे तु यागद्वारेति विवेकः। कार्यत्वस्य कृतिसाध्यत्वरूपतया तस्य कृतिघटितत्वात्, कृतेश्च सविषयत्वाद्विषयाकाङ्क्षोदेति, तथा च याग एव कृतौ विषयतयान्वेति, कार्यमपि च नियोज्ये साकाङ्क्षं—'कस्य पुंसः कार्य'मिति, ज्योतिष्टोमे नियोज्यश्च स्वर्गकामः पुमान्, तदेवं—ज्योतिष्टोमाख्ययागविषयकस्वर्गकामनिष्ठकृतिसाध्यमपूर्वमिति शाब्दबोधः सम्पन्न इत्याशयः। 'नियोज्य'पदार्थमाह—**कार्येति।** इदं मत्कृतिसाध्यमिति ज्ञानवान् पुमान् 'नियोज्य' इत्युच्यत इत्यर्थः।

ननु नित्येऽग्निहोत्रादौ स्वर्गादिफलाभावात्कथं लिङोऽपूर्ववाचकत्वन्तत्रेत्याशङ्क्याह—**वैदिकेति।** वाच्यं = लिङ्वाच्यम्, कार्यत्वेन रूपेणापूर्वमेव लिङ्वाच्यमिति यावत्, ननु लौकिके कर्मण्यपूर्वरूपफलासम्भवाल्लिङो

❀ दीपिका ❀

वाच्यं कल्प्यते । 'आरोग्यकामो भेषजपानं कुर्या'दित्यादि-लौकिकलिङः क्रियाकार्य्ये लक्षणेति चेन्न, यागस्याप्ययोग्यतानिश्चयाभावेन साधनतया प्रतीत्यनन्तरं, निर्वाहार्थमवान्तरव्यापारतयाऽपूर्वकल्पनात्, कीर्तनादिना नाशश्रुतेर्न यागध्वंसो व्यापारः । लोकव्युत्पत्तिबलात् क्रियायामेव कृतिसाध्येष्टसाधनत्वं लिङा बोध्यत

❀ परिमलः ❀

ऽपूर्ववाचकत्वं कथमित्यत आह—**क्रियाकार्य इति**। पानकरणरूपक्रिया-निष्ठकार्ये, **लक्षणेति**। लिङर्थस्यापूर्वस्य भेषजपानरूपक्रियास्थले कल्पयितुमशक्यतया लक्षणया क्रियाकार्यबोध आदृत इत्याशयः । गुरुमतं खण्डयति—**नेति**। 'यागस्य' स्वर्गसाधनयोग्यत्वं नास्ती'ति निश्चयविरहात्स्वर्गसाधनत्वस्य यागे बाधाभावाद्—'यागः स्वर्गसाधन'मित्येवं प्रत्ययो भवतीति—वैदिक-लौकिक-लिङ्प्रत्ययस्य कार्यत्व एव शक्तिः स्वीक्रियते, न'त्वपूर्वे शक्तिर्वैदिकलिङः, लौकिकलिङश्च लक्षणे'ति अर्धजरतीयं युक्तमित्याशयः ।

'ज्योतिष्टोमेने'त्यादिवाक्याद्यागे इष्टसाधनत्वादिरूपकार्यत्वनिश्चये सति यागस्य चिरध्वस्तस्य व्यापारं विना फलजनकत्वासम्भवात्तन्निर्वाहायापूर्वं कल्प्यते इत्याह—**अवान्तरेति**। ननु यागध्वंस एव तर्हि व्यापारतया कल्प्यतां, किमपूर्वकल्पनयेत्यत आह—**कीर्त्तनादिनेति**। 'धर्मः क्षरति कीर्त्तना'दिति वचनेन[१]। यागादिरूपधर्मस्य प्रकटीकरणनाश्यत्वात् यागध्वंसस्य तत्रापि सत्त्वात्स्वर्गापत्तिरतो ध्वंसस्य व्यापारत्वं वक्तुमशक्यमित्याशयः।

**लोकव्युत्पत्तीति**। 'यदिच्छया यत्र प्रवृत्तिस्तत्—तत्साधनं भवती'त्येव रूपाल्लोकव्यवहारात् पाकयागादिक्रियायामेव—नत्वपूर्वे—कृति-

१ "कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्त्तनात् ॥"

❀ दीपिका ❀

इति लिङ्त्वेन विध्यर्थकत्वम् , आख्यातत्वेन यत्नार्थकत्वम् । 'पचति' 'पाकं करोती'ति विवरणदर्शनात्, 'किं करोती'ति प्रश्ने 'पचती' त्युत्तराच्चाख्यातस्य प्रयत्नार्थकत्वनिश्चयात् ।

'रथो गच्छती'त्यादावनुकूलव्यापारे लक्षणा, 'देवदत्तः पचति,' 'देवदत्तेन पच्यते तण्डुलः, इत्यादौ कर्तृकर्मणोर्नाख्यातार्थत्वम्, किं तु तद्गतैकत्वादीनामेव, तयोराक्षेपादेव लाभः ।

❀ परिमलः ❀

साध्यत्वमिष्टसाधनत्वञ्च लिङा बोध्यत इत्यर्थः । लिङ्त्वेन = यजेतेत्यादौ 'ते'प्रत्ययस्य लिङ्त्वेन रूपेण, आख्यातत्वेन = तिङ्त्वादिना, करोतीति । करोतेर्यत्नार्थकत्वस्य प्रसिद्धत्वादित्याशयः । निश्चयादिति । कृञा विवरणाच्च यत्नार्थकत्वस्य लाभादित्यर्थः । अयम्भावः—कृतित्वावच्छिन्ने जिज्ञासितसम्बन्धबोधकं हि किं करोतीति वाक्यं, तथा च 'पचती'त्युत्तरवाक्यस्यापि कृतित्वावच्छिन्ने पाकसम्बन्धबोधकत्व एव जिज्ञासानिवर्त्तकत्वमतः कृतौ शक्तिर्निश्चीयत—इति ।

रथस्याचेतनत्वात्तत्र कृत्यसम्भवादाख्यातस्य कृतौ कथं शक्तिरित्यत आह—लक्षणेति । अनुकूलेति । गमनानुकूलव्यापार इत्यर्थः । वैयाकरणाभिमतं कर्त्तृकर्मवाचित्वमाख्यातानां निरस्यति—देवदत्त इति । कर्त्रादावाख्यातस्य शक्तिस्वीकारेऽनन्तकृत्यादौ शक्यतावच्छेदकत्वमङ्गीकर्त्तव्यम्, कृत्यादौ शक्तिस्वीकारे तु कृतित्वं शक्यतावच्छेदकमिति हि लाघवमनुसन्धेयम् । तद्गतैकेति । कर्त्रादिगतैकत्व-कृत्यादेरित्यर्थः, 'आख्यातार्थत्व'मिति शेषः । तयोः = कर्त्तृ-कर्मणोः, आक्षेपादिति । मीमांसकमतेनेदं, [वस्तुतस्तु प्रथमान्तपदेनैव तयोर्लाभः । उपसर्गाणां वाचकत्वं निरस्यति—प्रजयतीत्यादाविति । धातोः = 'जि'धातोः, प्रकर्षे = उत्कृष्टजये, द्योतकत्वं = तात्पर्यग्राहकत्वम् , तत्र = उत्कर्षादिनिरूपिता, उपसर्गनिष्ठा ।

❀ दीपिका ❀

'प्रजयती'त्यादौ धातोरेव प्रकर्षे शक्तिः, उपसर्गाणां द्योतकत्वमेव, न तु तत्र शक्तिरस्ति।

पदार्थज्ञानस्य परमप्रयोजनं-मोक्षः। तथा हि 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या श्रवणादीनां तत्त्वसाक्षात्कारे हेतुत्वबोधनात्। श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यप्यसम्भावनानिवृत्तेः—युक्त्यनुसन्धानरूपमननसाध्यत्वात्। मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगित्वम्। तदनन्तरं श्रुत्युपदिष्टयोगविधिना निदिध्यासने कृते, तदनन्तरं देहादिविलक्षणात्मसाक्षात्कारे सति, देहादावहमभिमानरूपमिथ्याज्ञान-

❀ परिमलः ❀

पदार्थतत्त्वज्ञानस्य मुक्तिफलकत्वं प्रदर्शयति—**मोक्ष इति**। द्रष्टव्यः= मुमुक्षोरात्मदर्शनमिष्टसाधनम्।—आत्मदर्शनोपायमाह—**श्रोतव्य इति**। श्रुत्या = वेदेन, **देहादिविलक्षणेति**। देहादिभिन्न आत्मेति आत्मज्ञाने इत्यर्थः। **असम्भावनेति**। तादृशज्ञानेऽप्रामाण्यसंशयनिवृत्तेरित्यर्थः। **मननेति**। तच्चात्मन इतरभिन्नत्वेनानुमानम्, तच्च भेदप्रतियोगिनां पदार्थान्तराणां ज्ञानेनैव, तथा च पदार्थान्तरज्ञानमपि आत्मदर्शन उपयुज्यत एवेति पदार्थनिरूपणपरस्यास्य शास्त्रस्य मोक्षोपयोगित्वं स्फुटमेवेत्याशयः। मोक्षोपयोगितां स्फुटीकुरुते—**तदनन्तरमिति**। मननान्तरमित्यर्थः। योगविधिना = योगमार्गेण, विषयेभ्य इन्द्रियाणि, इन्द्रियेभ्यो मनश्चाहृत्यैकत्र साक्षात्करणीये वस्तुनि मनोनिवेशनं हि योगः। निदिध्यासने = श्रुतस्यार्थस्य निरन्तरमनुसन्धाने, तदनन्तरं = निदिध्यासनानन्तरं, देहादौ = शरीरेन्द्रियादौ, **अहमभिमानेति**। 'अह'मित्यभिमानेत्यर्थः। दोषाभावात् = रागादिदोषाभावात्, प्रवृत्त्यभावे = कर्मप्रवृत्त्यभावे, अनु-

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ॥**
**अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः ॥ ७० ॥**

❀ न्यायबोधिनी ❀

**काणादेति ।** कणादस्येदं काणादम् । काणादन्यायमतेति द्वन्द्वगर्भ-कर्मधारयः । कणादप्रोक्तगौतमप्रोक्तमतयोरिति यावत् । काणादन्याया-

❀ दीपिका ❀

नाशे सति, दोषाभावात् प्रवृत्त्यभावे, धर्माधर्मयोरभावाज्जन्माभावे, पूर्वधर्माधर्मयोरनुभवेन नाशे, चरमदुःखध्वंसरूपो मोक्षो जायते ।

ज्ञानमेव मोक्षसाधनम्, मिथ्याज्ञाननिवृत्तेर्ज्ञानमात्रसाध्यत्वात्, 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति साधनान्तरनिषेधाच्च ।

ननु 'तत्प्राप्तिहेतु विज्ञानं कर्म चोक्तं महामुने'! इति कर्मणोऽपि मोक्षसाधनत्वश्रवणात् ज्ञानकर्मणोः समुच्चय इति चेन्न,

'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥"

'अभ्यासात् पक्वविज्ञानः कैवल्यं लभते नरः' । इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनात्, ज्ञानद्वारैव कर्म मोक्षसाधनम्, न साक्षात्, तस्मात् पदार्थज्ञानस्य मोक्षः परमप्रयोजनमित्येव रमणीयमिति ।

❀ इति श्रीमदन्नम्भट्टोपाध्यायविरचिता तर्कसंग्रहदीपिका समाप्ता ❀

❀ परिमलः ❀

भवेन = भोगेन, **चरमेति ।** यदनन्तरं पुनर्दुःखोत्पत्त्यभावस्तादृशदुःख-ध्वंसे, मिथ्याज्ञाननिवृत्तेः = 'अहं स्थूलः' 'अहं सुखी'त्यादिमिथ्याज्ञान-

❀ न्यायबोधिनी ❀

भिन्नमतद्वयविषयकबालसमवेताभिन्नव्युत्पत्तिसिद्धिप्रयोजकान्नम्भट्टविद्वन्निष्ठ-भूतकालीनकृतिविषयाभिन्नस्तर्कसंग्रहाख्यग्रन्थ इत्यन्वयबोधः ।

कृष्णावलम्बिनी गाः पूषा गोवर्धनस्तमभ्यर्चन् ॥
विपुलाभीरसभाजनजितविबुधेन्द्रस्तवाभिरचनाभिः ॥ १ ॥



॥ इति श्रीगोवर्द्धनकृता न्यायबोधिनी समाप्ता ॥

---

❀ परिमलः ❀

निवृत्तेः, तमेव = ईश्वरमेव, अतिमृत्युमेति = मृत्योरपि विजयी भवति, अमृतत्वाय कल्पते, इति = इति श्रुत्या, **साधनान्तरेति** । ज्ञानातिरिक्त-साधनान्तरेत्यर्थः । तत्प्राप्तिहेतु = मोक्षप्राप्तिहेतु, ज्ञानद्वारैव = ज्ञानोत्पादकतयैव, कर्म = यागादिकं, पदार्थज्ञानस्य = पदार्थतत्त्वज्ञानस्य, परमप्रयोजनम् = आत्यन्तिकं फलम् । रमणीयम् = सुन्दरं, सर्ववादिसम्मतमिति यावत् ।

---

इति सकलशास्त्राटवीविहरणपञ्चानन–पट्शास्त्रवाचस्पति-प्रत्यग्रशङ्कराचार्यश्री'स्नेहिरामशास्त्रि'णां पौत्रेण, न्यायशास्त्राचार्य-प्रतिवादिभयङ्करभयङ्कर-श्रीशिवनारायणशास्त्रिणान्तनुजनुपा, 'राजलक्ष्मी'गर्भसम्भवेन, ——— श्री'राधाकृष्णजी–पोद्दार'महोदयलब्धसाहाय्येन, श्रीगुरुप्रसादशास्त्रिणा विरचितोऽभिनवराजलक्ष्मीपरिमलः समाप्तः । शिवार्पणमस्तु

ज्येष्ठ कृ० १० गुरौ १९९१

काश्याम् ।



...विरुद्ध यह अनुचित कार्य किया है। इसके विरोध में नगर के प्रमुख का... ...सम्मानित व्यक्तियों की नामावली प्रस्तुत की जाती है।

प्रस्तावक –

रामपूर्ति शास्त्री पौराणिक

## निवेदक गण –

१–श्री कैलाशपति त्रिपाठी महन्त, अध्यक्ष श्री विश्वनाथ मन्दिर, वाराणसी। २–कविराज पं० श्रीव्रजमोहन दीक्षित काशी रसशाला। ३–श्री चरणदास सेठ वकील मीरघाट। ४–पं० श्री रामलाल शास्त्री, लाहौरीटोला। ५–पं० श्री लालविहारी शास्त्री, ललिताघाट। ६–कविराज पं० शशिकान्त दीक्षित। ७–श्री रामशरण सेठ कोषाध्यक्ष मा० शि० सं०। ८–श्री कन्हैयालाल वकील, लहौरीटोला। ९–श्री कृष्णगोपाल खत्री एडवोकेट, मीरघाट। १०–श्री कृपाशंकर मिश्र एडवोकेट ब्रह्मनाल। ११–श्री कृष्णकुमार आनन्द एडवोकेट मीरघाट। १२–श्रीरामलाल मेहरा एडवोकेट मीरघाट। १३–डा० देवीप्रसाद अग्रवाल एम.डी.एच मेडिकल आफिसर बी.एस. मेहता अस्पताल रामघाट। १४–श्री अनिलकुमार मैनेजर ज्ञानेश्वर सिल्कालय लाहौरीटोला। १५–श्री बाँकेबिहारी खन्ना लाहौरी टोला। १६–आनन्द किशोर मिश्र लाहौरीटोला। १७–चन्द्रसेन मेहरोत्रा स्टेट बैंक आफ इंडिया। १८–डा० श्रीबद्रीनारायण मिश्र, लाहौरीटोला। १९–श्री बजरंगबली सिंह वैद्य, लाहौरी टोला। २०–पं० श्री रामकिशोर अग्निहोत्री। २१–श्रीगौरीशंकर ठाकर अध्यक्ष ललिताघाट, इत्यादि इत्यादि।

नोट–ट्रस्ट के अध्यक्ष हाईकोर्ट के रिटायर्ड जज सी. डी. पारिख तथा विद्यालय के प्रिंसिपल याज्ञिक सम्राट् पण्डित प्रवर श्रीवेणीराम शर्मा गौड ने भी इस कार्य में लिखित अपनी असहमति प्रकट की है।